ह्रीः

# दुर्लभबौद्धग्रन्थशोधपत्रिका

## A Review of rare buddhist texts

**12**

दुर्लभ बौद्ध ग्रन्थ शोध योजना
केन्द्रीय उच्च तिब्बती शिक्षा संस्थान
सारनाथ, वाराणसी
1991

धीः

# दुर्लभ बौद्ध ग्रन्थ शोध पत्रिका

## 12

सम्पादक

प्रो० एस० रिनपोछे
योजना निदेशक

प्रो० व्रजवल्लभ द्विवेदी
उपनिदेशक




**दुर्लभ बौद्ध ग्रन्थ शोध योजना**
**केन्द्रीय उच्च तिब्बती शिक्षा संस्थान**
**सारनाथ, वाराणसी**

बुद्धाब्द २५३५ कार्तिक पूर्णिमा ख्रीस्ताब्द १९९१

# Dhīḥ

## A Review of rare buddhist texts

# 12

*Editors*

PROF. SAMDHONG RINPOCHE
**Project Director**

PROF. VRAJVALLABH DWIVEDI
**Deputy Director**



**RARE BUDDHIST TEXT RESEARCH PROJECT**
**Central Institute of Higher Tibetan Studies**
**SARNATH, VARANASI**

**B. E. 2535** KĀRTIKA PŪRNIMĀ **C. E. 1991**

# धीः XII

## विषयानुक्रमणी





आयातायात शीघ्रं भयमपनयत भ्रातरो जीविताः स्मः
संप्राप्तोऽस्माकमेष ज्वलदभयकरः कोऽपि चीरी कुमारः ।
सर्वं यस्यानुभावाद् व्यसनमपगतं प्रीतिवेगाः प्रवृत्ताः
जातं संबोधिचित्तं सकलजनपरित्राणमाता दया च ॥

( बोधिचर्यावतार, १०।१३ )

# श्रीमहाकालस्तोत्रम्

[ श्री महाकालस्तोत्र और श्री महाप्रतिसरास्तोत्र, ये दोनों स्तोत्र 'अप्रकाशित स्तोत्र-संग्रह' ( स्तोत्र संख्या 154 और 172, पत्र संख्या 185-186 तथा 195-197 ) से लिये गये हैं। यह संग्रह श्री जगन्नाथ उपाध्याय जी के व्यक्तिगत संग्रह से प्राप्त हुआ है, जिसका विवरण 'धीः' अंक 1, पृष्ठ 42-63 में दिया जा चुका है। ]

नमस्यामि महाकालं सर्वसम्पत्तिदायकम्।
खर्वं लम्बोदरं नीलमष्टनागविभूषितम् ॥१॥

द्विभुजैकमुखं वीरं कपालकृतशेखरम्।
व्याघ्रचर्मकटीवेष्टं शतार्धमुण्डमालिनम् ॥२॥

भावाभावपरिच्छिन्नं जगत्संबोधकारकम्।
सर्वभावात्मकं नाथं जगन्नाथ नमोऽस्तु ते ॥३॥

कृष्णवर्णं महातेजं सिद्धसाधकरक्षकम्।
कर्तिकपालिनं नाथं महाकाल नमोऽस्तु ते ॥४॥

व्याघ्रचर्माम्बरधरं महाक्रोधस्वरूपिणम्।
द्वादशादित्यसंकाशं महाकाल नमोऽस्तु ते ॥५॥

महादंष्ट्राकरालास्यं ललज्जिह्वं सभैरवम्।
महारक्ताभनयनं महाकाल नमोऽस्तु ते ॥६॥

बिभ्रन्नरशिरोमालां नागराजविभूषितम्।
श्मश्रुतुन्दिलकं वन्द्यं महाकाल नमोऽस्तु ते ॥७॥

सभ्रूभङ्गं त्रिनेत्रं चैवोर्ध्वपिङ्गोर्ध्वकेसरम्।
युगान्तानलपुञ्जाभं महाकाल नमोऽस्तु ते ॥८॥

त्रासकं सर्वदैत्यानामा(म)ल्यसृङ्मांसभक्षकम्।
रक्षितारं भक्तिमतां महाकाल नमोऽस्तु ते ॥९॥

सिद्धिसाधनमन्त्रस्य विहेठीज्यनराशनम्।
युग्मस्याश्वासदातारं महाकाल नमोऽस्तु ते ॥१०॥

संसारजलधेः पारं नौका यानैकगामिनी।
नौकायाने स्वतेजास्त्वं महाकाल नमोऽस्तु ते ॥११॥

महाकालस्तवं चैतद् यः पठेद् भक्तिमान् नरः।
भयार्तो मुच्यते भीतेररिचिन्ता निवर्तते ॥१२॥

महाकालं नमस्कृत्य यथोक्तकुलजन्मतः।
तेन सुजन्मा भवति सर्वसिद्धिपरायणः ॥१३॥

॥ श्रीमहाकालस्तोत्रं सम्पूर्णम् ॥

# श्रीमहाप्रतिसरास्तोत्रम्

ॐ नमः श्रीमहाप्रतिसरायै ।

यस्याः स्मरणमात्रेण सर्वे पापाः क्षयं गताः ।
यया युक्तो वज्रकायो नमस्तस्यै नमो नमः ।।१।।

यां स्मरन् राक्षसः क्रूरो माठरं कुक्षिसंस्थितम् ।
प्राक्षिपद् गोविषं नद्यां नमस्तस्यै नमो नमः ।।२।।

याऽरक्षत् वणिजः पुत्रं क्रूरसर्पाद् वधोद्यतात् ।
विषदाहमुमूर्षुं च नमस्तस्यै नमो नमः ।।३।।

ब्रह्मदत्तो महाराजो यया रक्षितमस्तकः ।
रिपुं जित्वा विराजोऽभून्नमस्तस्यै नमो नमः ।।४।।

भिक्षुर्दुःशीलको रोगी यया कण्ठे प्रबन्धितः ।
प्राणान्मुक्त्वा ययौ स्वर्गं नमस्तस्यै नमो नमः ।।५।।

समुद्रे पोतसंक्षुब्धे वणिजां प्राणरक्षकः ।
यां स्मरन् सार्थवाहोऽभून्नमस्तस्यै नमो नमः ।।६।।

यस्यां च प्रतिबद्धायां भार्यायां सुतमाप्तवान् ।
प्रसारितभुजो राजा नमस्तस्यै नमो नमः ।।७।।

दरिद्रो यां प्रति स्मृत्वा दीनारान् प्रददौ जिने ।
राजाऽभीष्टप्रदाताऽभून्नमस्तस्यै नमो नमः ।।८।।

यां प्रबद्ध्वाऽसुरैर्युद्धं शक्रश्चूडामणौ प्रभुः ।
लब्धवान् विजयं वज्री नमस्तस्यै नमो नमः ।।९।।

यस्या मन्त्रबलेनैव पूर्य पारमिताश्च षट् ।
मारा जिता जिनैर्बुद्धैर्नमस्तस्यै नमो नमः ।।१०।।

अपघोरो वधार्होऽपि प्रक्षिप्तः सर्वसङ्कटे ।
यां स्मृत्वा परिमुक्तोऽभून्नमस्तस्यै नमो नमः ॥११॥

यया बन्धितकण्ठश्च मुक्तोऽभूत् पापसङ्कटात् ।
नगरे नायकोऽभूच्च नमस्तस्यै नमो नमः ॥१२॥

या चाऽपराजिता विद्या सर्वबुद्धैश्च धारिता ।
मुद्रिता भाषिता नित्यं पठिता परिदेशिता ॥१३॥

लिखिता मोदिता सत्त्वहिताय पूजिता सदा ।
स्मृता कायगता कृत्वा नमस्तस्यै नमो नमः ॥१४॥

यस्याः स्मरणमात्रान्न दुर्लभं भुवनत्रये ।
पाठस्वाध्यायनाद्वापि नमस्तस्यै नमो नमः ॥१५॥

या विद्या दुर्लभा बुद्धैर्व्याकृता सुप्रशंसिता ।
महती धारणी ख्याता सर्वपापक्षयङ्करी ॥१६॥

महाबला महावीर्या महातेजा महत्प्रभा ।
महागुणवती विद्या सर्वभारविदारणी ॥१७॥

पापसन्धिसमुद्घाती मारबन्धप्रमोचनी ।
जननी बोधिसत्त्वानां सर्वदुष्टविनाशिनी ॥१८॥

रक्षणी पोषणी धात्री परमन्त्रविघातिनी ।
कार्खोदविषयोगानां विध्वंसनकरी शिवा ॥१९॥

महाध्यानरतानां च गृह्णतां लिखतां सदा ।
पाठाध्ययनकृतां नित्यं दधतां शृण्वतां तथा ॥२०॥

परेभ्यो देशिता चैव नित्यं मनसि भाविता ।
सा पुस्तकगतां कृत्वा पूज्यमाना नमस्कृता ॥२१॥

सर्वपापहरी भद्रा बोधिसंभारपूरिणी ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥२२॥

यस्या मन्त्रप्रभावेण सर्वभयोपद्रवाः ।
दुष्टाः सुरमनुष्याश्च दैत्यगन्धर्वराक्षसाः ॥२३॥

ग्रहाः स्कन्दा अपस्माराः पिशाचा यक्षकिन्नराः ।
डाकिन्यः शाकिनीसंघा नागा कार्खोदव्याधयः ॥२४॥

ज्वराश्च विविधा रोगाः परकर्मकृतास्तथा ।
विषाग्निशस्त्रमन्त्राणि विद्युतः कालवायवः ॥२५॥

अतिवृष्टिरनावृष्टिः सर्वशत्रुभयानि च ।
तथान्ये पापसर्गा वा विनश्यन्ति न संशयः ॥२६॥

सर्वकार्याणि सिद्ध्यन्ति नमस्तस्यै नमो नमः ।
यश्चैतां धारयेद्विद्यां कण्ठे बाहौ च मस्तके ॥२७॥

नित्यं रक्षन्ति देवास्तं दैत्या नागाश्च मानुषाः ।
गन्धर्वाः किन्नरा यक्षा भूतप्रेतपिशाचकाः ॥२८॥

डाकिन्यो राक्षसा दूत्यः कूष्माण्डाः कठपूतनाः ।
त्रिसन्ध्यं यः पठेन्नित्यं बुद्धा रक्षन्ति तं सदा ॥२९॥

प्रत्येकाः श्रावकाश्चैव बोधिसत्त्वा महर्धिकाः ।
योगिनः सिद्धमन्त्राश्च महावीर्या महर्षयः ॥३०॥

वज्रपाणिश्च यक्षेन्द्रः शक्रश्च त्रिदशैः सह ।
चत्वारश्च महाराजा ब्रह्मविष्णुमहेश्वराः ॥३१॥

नन्दिकृष्णो महाकालः कार्तिकेयो गणेश्वरः ।
भैरवा मातृका दुर्गास्तथाऽन्ये मारकायिकाः ॥३२॥

विद्यादेव्यो महावीर्या महाबलपराक्रमाः ।
मामकी भृकुटी तारा चाङ्कुशी वज्रशृङ्खला ॥३३॥

महाश्वेता महाकाली वज्रदूती सुपाशिका ।
वज्रमाला महाविद्या सुवीर्याऽमृतकुण्डली ॥३४॥

वज्राऽपराजिता चण्डी कालकर्णी महाबला ।
तथा धन्या महाभागा पद्मकुण्डलिरेव च ॥३५॥

मणिचूडा पुष्पदन्ती स्वर्णकेशी च पिङ्गला ।
एकजटा महादेवी धन्या विद्युन्मालिनी ॥३६॥

कपालिनी च लङ्केशी ब्रह्मक्षितिकनायिका ।
हारीती पाञ्चिकाश्चैव शङ्खिनी कूटदन्तिनी ॥३७॥

श्रीः सरस्वती लक्ष्मीः सिद्धेश्वरी सदानुगा ।
तमेवाऽन्येऽपि रक्षन्ति यस्य विद्या करे स्थिता ॥३८॥

स भवेत् सर्वसत्त्वानां मोक्षार्थं च समुद्यतः ।
नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥३९॥

॥ इति श्रीमहाप्रतिसरास्तोत्रं समाप्तम् ॥

# दुर्लभ ग्रन्थ परिचय

—जनार्दन पाण्डेय—

[ प्रस्तुत अंक में निम्नलिखित ग्रन्थों का परिचय दिया जा रहा है—

1. एकल्लवीराख्य चण्डमहारोषणतन्त्र
2. एकल्लवीराख्य चण्डमहारोषणपञ्जिका ( पद्मावती )—महासुखवज्रपाद
3. चतुष्पीठमहातन्त्रराज
4. चतुष्पीठमहातन्त्रराजविवृति
5. चतुष्पीठमहातन्त्रराजपञ्जिका ( मितपदा )—दुर्जयचन्द्र
6. करवीरहृदयतन्त्र
7. कुरुकुल्लातन्त्र
8. चक्रसंवरविवृति
9. चक्रसंवरपञ्जिका—जयभद्र
10. शुचीकरण—कनेरिपा
11. अधिष्ठानमन्त्राः ]

## 1. एकल्लवीराख्य चण्डमहारोषणतन्त्र

**ग्रन्थ**—एकल्लवीराख्य चण्डमहारोषण तन्त्र
**संख्या**—ए० 136.5
**पत्र संख्या**—105, **पंक्ति प्र० प०**—5, **अक्षर प्र० पं०**—34
**आधार**—नेपाली कागज, **लिपि**—नेवारी, **अपूर्ण** ( 3.6.1। पत्र नहीं हैं। )

### प्रारम्भ

ॐ नमः श्रीचण्डमहारोषणाय। एवं मया श्रुतमेकस्मिन् समये भगवान् वज्रसत्त्वः सर्वतथागतकायवाक्चित्तहृदये वज्रधात्वीश्वरीभगे प्रविजहार। अनेकैश्च योगिनी-गणैः। तद्यथा च श्वेताचलेन चतुर्वज्रयोगिना पीताचलेन वज्रयोगिना रक्ताचलेन वज्रयोगिना श्यामाचलेन वज्रयोगिना मोहवज्रया च वज्रयोगिन्या पिशुनवज्रया च वज्रयोगिन्या रागवज्रया च वज्रयोगिन्या ईर्ष्यावज्रया च वज्रयोगिन्या एवं प्रमुखैः

योगिनीकोटिनियुतशतसहस्त्रैः। अथ भगवान् कृष्णाचलसमाधिं समापद्येदमुदाजहार—

भावाभावविनिर्मुक्तश्चतुरानन्दैकतत्परः ।
निःप्रपञ्चस्वरूपोऽहं सर्वसंकल्पवर्जितः ॥
मां न जानन्ति ये मूढाः सर्वविद्यावप(व्यव)स्थितम् ।
तेषामहं हितार्थाय पञ्चाकारेण संस्थितः ॥

**अन्त**

इदमवोचद् भगवान् श्रीवज्रसत्त्वस्ते च योगिनी-डाक-डाकिनी-अशीतिकोट्या च बोधिसत्त्वास्तथागतसंघे नैकधा प्रीतिप्रह्लादचित्तास्तु सर्वतथागतज्ञानचामांतु-(कामास्तु) सर्वे वज्रगर्भप्रमुखा महाबोधिसत्त्वाः सर्वे च देवनागयक्षगन्धर्वासुरमरुत्किन्नरमहोरगगणा भगवतो भाषितमभ्यनन्दन्निति ॥

**पुष्पिका**

इति एकल्लवीराख्यश्रीचण्डमहारोषणतन्त्रराजः समाप्तः। ये धर्मा० ॥

**विवरण**

यह पाण्डुलिपि डा० ठाकुरसेन नेगी के व्यक्तिगत संग्रह से उपलब्ध हुई है, जिसे उन्होंने नेपाल से जीराक्स करवाया है। यह एक महत्त्वपूर्ण और बहुचर्चित ग्रन्थ है। इसके विषय में निम्नांकित बातें विशेष ध्यातव्य हैं—

1. एकमात्र उपर्युक्त मातृका, जिसका विवरण दिया जा रहा है, ऐसी है, जिसमें 32 पटल हैं। अन्यत्र जहाँ-जहाँ भी यह उपलब्ध है, सर्वत्र केवल 25 ही पटल हैं। तिब्बती में इसका अनुवाद भी 25 पटल तक का ही हुआ है।

2. डा० नेगी के संग्रह में धर्मरत्नवज्राचार्य के संग्रह से जीराक्स कराई हुई इसकी एक पाण्डुलिपि और है, जिसकी प्रत्येक पुष्पिका में "इति श्रीनीलतन्त्रे" अधिक जोड़ा गया है और अन्तिम पुष्पिका में—"इति श्रीनीलतन्त्रे कल्ल० चण्ड० देवीसाधनाविधि श्रीमच्छेन्द्रनाथप्रकरणे पातालखण्डे पञ्चविंशतितमः पटलः" लिखा है। इसमें भी 25 पटल ही हैं। इसमें बीच-बीच में "भैरवोवाच" "देव्युवाच" भी आया है, जो अन्य मातृकाओं में नहीं मिलता। इस मातृका का विवरण हम 'धीः' अंक 9 में दे चुके हैं।

3. इस तन्त्र के 1 से 8 पटल तक का रोमनलिपि में मूल, तिब्बती और अंग्रेजी अनुवाद के साथ एक उत्तम संस्करण 1947 में क्रिस्टोफर एस० जार्ज ने अमेरिकन ओरियण्टल सोसाइटी, न्यू हेवन, कैनेक्टिकट से प्रकाशित किया है।

## विषय विवेचन

इस ग्रन्थ में वर्णित विषयवस्तु प्रत्येक पटल की पुष्पिका में दी गई है। 1 से 25 पटल तक की अवान्तर पुष्पिकाएँ 'धीः' अंक 9, पृष्ठ 21 में आ चुकी हैं, शेष 26 से 32 तक इस प्रकार हैं—

इत्येकल्लमहावीराख्ये चण्डमहारोषणतन्त्रे होमपटलः षड्विंशतितमः। पत्र 93
" " भीमानुस्मृतिपटलः सप्तविंशतितमः। पत्र 94
" " साधनानुस्मृतिपटलोऽष्टाविंशतितमः। प० 96
" " चर्यासमयपटलोनत्रिंशत्तमः। प० 99
" " सर्वापायिकविशेषपटलस्त्रिंशत्तमः। प० 101
" " सिद्धिनिर्णयपटल एकत्रिंशत्तमः। प० 103
" " मञ्जुवज्रसाधनपटलः द्वात्रिंशतितमः। प० 108

## 2. एकल्लवीराख्य-चण्डमहारोषणतन्त्रटीका

**ग्रन्थ**—चण्डमहारोषणतन्त्रटीका ( पद्मावती )
**ग्रन्थकार**—महापण्डित महासुखवज्रपाद
**संख्या**—3.402
**पत्रसंख्या**—34, **पंक्ति प्र० प०**—8, **अक्षर प्र०प०**—54
**आधार**—ताड़पत्र, **लिपि**—नेवारी, **पूर्ण**।

### प्रारम्भ

ॐ नमश्चण्डमहारोषणाय
मग्नं येन जगच्चराचरमिदं मोहान्धकारोदरे
प्रज्ञोपायविभागभास्करकरैर्व्यक्तं समुद्दीपितम्।
·········समाधिमाद्यपुरुषः श्रीवज्रसत्त्वः स्वयं
सोऽयं सन्मुखसाधनाय जगति व्यक्तप्रभस्तिष्ठतु॥
एवम्मयेत्याह सङ्गीतिकारः, निदानवाक्यञ्चैतत्। यस्मात्सङ्गीतिकारेण सूत्र-तन्त्रादाववश्यं वक्तव्यं भगवतो वचनात्। तथा च एवम्मयाश्रुतमिति कृत्वा भिक्षवो मनस्ततः संगातव्य इत्यादि। एवं सति—

श्रद्धावतां प्रवृत्त्यङ्गं शास्ता पर्षच्च साक्षिणि(णी)।
देशकालौ च निर्दिष्टौ स्वप्रामाण्यप्रसिद्धये।

इति प्रतिपादितं भवति।

**अन्त**

इदमित्यादिं सङ्गीतिकारवचनम्। इदमुक्तलक्षणं सकलं तन्त्रं भगवानवोचत् कथितवान्। अभ्यनन्दन्ननुमोदितवन्त इति। समाप्तमिति निष्पन्नम्। ये धर्मा इत्यादि। ये धर्माः सप्त। विज्ञाननामरूपषडायतनस्पर्शवेदनाज्ञातिजरामरणाख्याः ते हेतुभ्यः पञ्चभ्यः अविद्यासंस्कारतृष्णोपादानभवाख्येभ्यो भवन्ति। हेतुः कारणं तेषां यथा गदनात्तथागतः, अवदत् उक्तवान्। कार्यकारणयोर्यो निरोध उपशमो निर्वाण एवं वदितुं शीलमस्येति।

विद्वान् शूरस्तपस्वी च महोत्साहोऽथ वीर्यवान्।
अद्भुतस्य च कर्ता हि महानित्यभिधीयते॥

शमितपापत्वात् संश्रमणः। क्लेशोपक्लेशशमनाद्वेति।

कृत्वा व्यक्ततरां मया पुनरिमां पञ्जीं गुरोराज्ञया
श्रीमत्तन्त्ररहस्यसाररचितां नाम्ना च पद्मावतीम्।
प्राप्तं पुण्यमनन्तविस्तरतरं यत्तेन लोकः कलौ
प्रज्ञोपायसमो ममैकरसिकश्चण्डाचलोऽस्तु द्रुतम्॥

**पुष्पिका**

इत्येकल्लवीरचण्डमहारोषणतन्त्रस्य पद्मावतीनाम पञ्जिका समाप्ता। कृतिरियं महापण्डितमहावज्रसुखपादानामिति॥

**विवरण**

यह ग्रन्थ डा० ठाकुरसेन नेगी के व्यक्तिगत संग्रह से प्राप्त हुआ है, जिसे उन्होंने नेशनल आर्काइब्ज काठमांडू से फोटो कापी कराया है, इसी के आधार पर उक्त विवरण दिया गया है। यह टीका भी 25 वें पटल तक ही है। प्रत्येक पटल के अन्त में विषय का निर्देश किया है, जैसे—'तन्त्रप्रधानं पटलः परिच्छेदः। इति प्रथमपटलव्याख्या' इत्यादि। ये विषय 'धीः' अंक 9 पृष्ठ 21 में दिये जा चुके हैं। यहाँ विशेष अवधेय अंश यह है कि टीकाकार ने "ये धर्माः" श्लोक की भी व्याख्या कर दी है। इससे हमें सही पाठनिर्धारण में सहायता मिलती है।

## 3. चतुष्पीठमहातन्त्रराज

**ग्रन्थ**—चतुष्पीठमहातन्त्रराज
**संख्या**—इ० 629.2
**पत्रसंख्या**—1–77, **पंक्ति प्र० प०**–6, **अक्षर प्र० पं०**–44
**आधार**—नेपाली कागज, **लिपि**–नेवारी, **पूर्ण।**

### प्रारम्भ

ॐ नमः श्रीवज्रसत्त्वाय।
एवं भाषितसर्वज्ञ रिगीनां ज्ञानमीश्वरम्।
शुद्धावासिकवस्थानं योगिनीजालसम्बरम्॥

धूतगुणाभीभत्सलम्बक त्रिकण्ठ मेरु मेरुशिखर पद्म पद्मोदर अशीतिकोटियोगीश्वर-मध्ये वज्रपाणिमवलोक्य स्मितमकार्षीत्। समनन्तरस्मिन् वज्रपाणिरुत्थाया-सनादेकांसमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य कृतकरपुटो भगवन्तमेतदवोचत्।

श्रोतुमिच्छामि ज्ञानेन्द्र रहस्यं योगलक्षणम्।
कथं सुन्दरिमाकाशमापतेजः कथं भवेत्॥
आनापानस्य श्वासानां कथं ज्ञान[म]बीयते।
राष्ट्रदेहादिदेवानां मण्डलं कीदृशी(शं) भवेत्॥
ज्ञानविज्ञानदेहस्य कथं कस्मा युञ्जयेत्। भगवानाह—

### अन्त

अरूपभवचक्रस्य च्युतिकाले हि देहिनाम्।
योगध्यानक्रिया[णां] तु संबोधिक्रमशीघ्रतः॥

इदमवोचद् भगवानात्तमना ते च सर्वे दशदिग्योगयोगिनीयं निपतिता तेन वज्र-पाणिप्रमुखा बोधिसत्त्वाः सर्वे च देवनागयक्षासुरगरुडकिन्नरमहोरगाः सर्वावतीपर्षद् भगवतो भाषितमभ्यनन्दन्निति।

### पुष्पिका

आर्यदशसाहस्रिके महत्य( संहृत्य ) द्वादशशतकस्य श्रीचतुःपीठमहातन्त्रराजेन्द्रः समाप्तः।

## विवरण

इस ग्रन्थ की माइक्रोफिल्म आशाकाजी वज्राचार्य, (काठमांडू नेपाल) के व्यक्तिगत संग्रह से प्राप्त हुई है, जिसके आधार पर यह विवरण दिया गया है। शान्तरक्षित ग्रन्थालय में इसकी अन्य भी तीन मातृकाएँ उपलब्ध हैं। संप्रति दुर्लभ बौद्ध ग्रन्थ शोध योजना में इसका सम्पादन हो रहा है।

## विषयनिर्देश

यह ग्रन्थ योग से सम्बद्ध है। इसमें चार पीठ हैं—आत्मपीठ, परपीठ, योगपीठ और गुह्यपीठ। प्रत्येक पीठ में चार-चार पटल हैं, जिनमें तत्सम्बन्धी भिन्न-भिन्न विषय वर्णित हैं।

**आत्मपीठ के प्रथमपटल में**—श्वास-प्रश्वास के प्रमाण से अहोरात्र का निर्माण और उसके अनुसार रोहित, मोहित, भद्र, वृषभ, कूर्म, मकर, खण्ड, मिकिर, भिद्रिक, व्याकुली, स्वप्नकाम और भुवनेश्वर, इन 12 योगों की निर्माण-प्रक्रिया तथा इन योगों में उत्पन्न व्यक्तियों के जीवन का फल एवं मृत्यु-काल की सूचना भी दी गई है।

**द्वितीयपटल में**—मृत्युसूचक चिह्नों का विवरण और उनसे होनेवाले दोषों की निवृत्ति के उपाय बताये हैं।

**तृतीय पटल में**—शून्य योगतत्त्व का विवेचन किया गया है।

**चतुर्थ पटल में**—ज्ञान के द्वारा ज्ञेय की गति का निरीक्षण कर संसारपाश से मुक्ति के लिये बीज, चिह्न, मुद्रा आदि का विधान है।

**परपीठ के प्रथम पटल में**—शान्तिक होम में बलि, पूजा, मुद्रा आदि की प्रक्रिया वर्णित है।

**द्वितीय पटल में**—जलहोमादि की प्रक्रिया का वर्णन है।

**तृतीय पटल में**—अद्वयज्ञान और समता-दृष्टि की प्राप्ति का वर्णन है।

**चतुर्थ पटल में**—योगशास्त्र में निर्दिष्ट आलि-कालि और पंचामृत का विधान है।

**योगपीठ के प्रथमपटल में**—अक्षोभ्यादि पंचबुद्धों की भावना, स्थापना, पूजन आदि का विधान है।

**द्वितीय पटल में**—शान्ति, पुष्टि, वश्य और रक्षा के लिये चक्रों का विवरण और उनके साधन की प्रक्रिया है।

**तृतीय पटल में**—अधिष्ठान क्रम की भावना से कुतूहल प्रदर्शन वर्णित है।

**चतुर्थ पटल में**—अद्वय योगतत्त्व का वर्णन है।

**गुह्यपीठ के प्रथम पटल में**—आचार्य के लक्षण, आचरण और साधन तथा शिष्यावाप्ति का विधान दिया है।

**द्वितीय पटल में**—चर्या योग का वर्णन है।

**तृतीय पटल में**—चञ्चल चित्त की समतायोग में प्रवृत्ति और सिद्धियों की प्राप्ति के लिये साधनाओं का विधान है।

**चतुर्थ पटल में**—समता उत्पादन के बाद योग की ध्यान-क्रियाओं के द्वारा संबोधिक्रम की उत्पत्ति का विवरण दिया गया है।

यह आगम ग्रन्थ अत्यन्त महत्त्वपूर्ण है।

### 4. चतुष्पीठमहातन्त्रराजविवृतिः

**ग्रन्थ**—चतुष्पीठमहातन्त्रराजविवृति
**संख्या**—इ० 629.2
**पत्रसंख्या—1-174, पंक्ति प्र० प०—6, अक्षर प्र० प० 43**
**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण**।

**प्रारम्भ**

ॐ नमो ज्ञानडाकिन्यै।

चतुष्पीठं वन्दे वनमिव शुचि श्रीफलपदं
मनोज्ञच्छायं तन्मणिवचनविन्यासरुचिरम्।
प्रबोधैरत्यन्तं सुरभिरसवर्णत्वकुसुमं
फलं नानारूपं सदृशसमयं यत्र फलति॥

विषदगुणमपि समन्तादविषदगुणमान्तरं बहुशः।
.... .... .... .... ॥

अमृतोद्भवं चतुष्पीठं नलिनीनालमिव तन्त्रम्।
स्फुटयितुममुष्य स्वर्णगिरेरिव क इच्छया शक्तः॥

दैवतमनुभावमृते कस्तत्र वयं नराभासाः।
मृगपतिविक्रमसाध्यगजमणिहरणे कथं स सम्भाव्यः॥

इह चरति यस्तपस्वी बाष्पच्छेद्यं तृणं हरिणः।
अथ गुरुवचनप्रगुणीकृतं न शक्नोमि किम्बिभ (?) मिदम्॥

भैषज्यं मृदुभूतं लोहेऽपि हि खादति जनोऽपि।
विसदृशमतयः सत्त्वास्तेषां को वेत्ति विषयमिष्टिगतम् ॥
.... .... .... .... ।
उपदेशमत्यणु गुणयत्नघ्वं(लब्धं) निबद्धामि ॥
अतिलौकिकमिह सर्वच्छन्दोलिङ्गविभक्तिवचनादि ।
अर्थालङ्कारधिया भरणी तन्त्रीरत्नमिदम् ॥

इदं खलु अष्टादशलक्षान्तःपाति त्रयोदशसाहस्रिकं चतुष्पीठसमुद्धृतं गुरुतन्त्रं तत्रैव स्थितत्वादिह एवं मयेति वाक्यमादावुपन्यस्तं संगीतिकारेण ।

**अन्त**

निजचित्तमिदं जगत्त्रयं सुसरुः खादि नतोऽनुभूयते ।
प्रकृतिश्च निजस्य चेतसा किमिव प्रत्यवबुध्यते स्वयम् ॥
मया चतुष्पीठमिदं विवृण्वता त(य)दर्चि(र्जि)तं पुण्यम[नन्य]भक्तिना ।
शरन्निशानाथमरीचिनिर्मलाः शुभा जनाः सन्तु मदर्थवेदिनः ॥

**पुष्पिका**

चतुष्पीठं समाप्तम् ।

**विवरण**

इस ग्रन्थ को माइक्रोफिल्म भी आशाकाजी वज्राचार्य के व्यक्तिगत संग्रह से शान्तरक्षित ग्रन्थालय में प्राप्त हुई है, जिसके आधार पर यह विवरण दिया जा रहा है। इसके अतिरिक्त भी दो पाण्डुलिपियां इस ग्रन्थालय में इसकी विद्यमान हैं। संप्रति मूल ग्रन्थ के साथ इस टीका का भी संपादन दु० बौ० ग्रन्थ शोध योजना में हो रहा है।

**विशेष**

यह केवल मूल की टीका मात्र नहीं है, विद्वान् टीकाकार ने विशेष स्थलों पर विस्तृत विवेचन द्वारा इसे स्वतन्त्र ग्रन्थ की कोटि में ला दिया है।

**5. चतुष्पीठमहातन्त्रराजपञ्जिका ( मितपदा )**

**ग्रन्थ**—मितपदापञ्जिका

**ग्रन्थकार**—महामण्डलाचार्य दुर्जयचन्द्र

**संख्या**—3.366 ( B 23.24 )
**पत्र संख्या**—60, **पंक्ति प्र० प०**—4, अक्षर प्र० पं०—48
**आधार**—ताड़पत्र, **लिपि**—नेवारी, **पूर्ण** ।

**प्रारम्भ**

नमः श्रीयोगाम्बराय ।

लोकोत्तराः षडधिका दश लोकपाला
अष्टावभीष्टफलदाश्चतुरष्टदेव्यः ।
तच्चक्रमध्यमहिषीरतिसंवराय
योगाम्बराय..............ते नमोऽस्तु ॥

आत्मा योगिशरीरमुक्त इतरः प्राणी परः प्रोच्यते
योगादैवतपूर्तिसम्पदुदितोष्णनं द्वयोः साधनम् ।
तच्चित्तास्पदमासनं निगदितं पी..............पाः
तन्त्रं तद् वचसा नमामि शिरसा श्रद्धा....चेतसा ॥

एषां काशमिव प्रकाशममितैरब्दैरशब्दैरिदं
तन्त्रं मन्त्रविपश्चितामपि दुरालोका.............. ।
किञ्चास्मद्गुरुभारतीतनुतडिद्विद्योतनादीक्षितं
यत् सन्देहपदं पदं मितपदा तत्पञ्जिका लिख्यते ॥

**अन्त**

स योगः कीदृगिति चेदाह—अणाहीत्यादि । अनादिरनुत्तरत्वात् । कुत एष ईदृगिति च यत जोइणीत्यादि । यत एण एतेन योगिनी माद्यति ततोऽयमादिः । अयमत्रार्थः—योगिन्याराधनं नाम नाल्पयशसस्तपसः फलम्, तदनेन सिद्ध्यतीत्यनादिरलं बहुना ।

**पुष्पिका**

इति महामण्डलाचार्यदुर्जयचन्द्रकृतायां मितपदायां पञ्जिकायां योगपीठः समाप्तः ।

**विवरण**

इस ग्रन्थ की माइक्रोफिल्म राष्ट्रीय अभिलेखालय काठमांडू, नेपाल से शान्तरक्षित ग्रन्थालय में प्राप्त हुई है, जिसके आधार पर यह विवरण दिया जा रहा है ।

इसमें आत्मपीठ, परपीठ और यागपीठ इन तीन पीठों पर ही टीका है, गुह्यपीठ पर नहीं। टीका संक्षिप्त पदार्थबोधिनी मात्र है। अन्तिम पत्रों में ताड़पत्र टूट जाने से कहीं-कहीं वाक्य खण्डित हो गये हैं।

## 6. करवीरहृदयतन्त्र

**ग्रन्थ**—करवीरहृदयतन्त्र
**संख्या**—240
**पत्रसंख्या**—1-6, **पंक्ति प्र० प०**—9, **अक्षर प्र० पं०**—68
**आधार**—ने० कागज, **लिपि**—नेवारी, **पूर्ण।**

### विवरण

यह ग्रन्थ आशाकाजी वज्राचार्य के संग्रह आशा आर्काइब्ज काठमांडू से जीराक्स करके मंगाया गया है। इसमें पहला प्रकरण (पत्र 1-3) "श्रीसिद्धैकल्लवीराक्षोभ्य-श्रीचण्डमहारोषणसाधनम्" नाम से है, जिसका विवरण दुर्लभ ग्रन्थ परिचय भाग 1 के पृष्ठ 83 पर दिया जा चुका है। जो शेष भाग है ( पत्र 3-6 ), उसका विवरण भी दुर्लभ ग्रन्थ परिचय पृष्ठ 128 पर "सिद्धैकवीरप्रतिभेदान्तर" नाम से दिया जा चुका है। केवल नाम भिन्न है, विषयवस्तु एक ही है।

## 7. कुरुकुल्लातन्त्र

**ग्रन्थ**—कुरुकुल्लातन्त्र
**संख्या**—246
**पत्र संख्या**—12, **पंक्ति प्र० प०**—9, **अक्षर प्र० पं०**—60
**आधार**—ने० कागज, **लिपि**—नेवारी, **पूर्ण।**

### विवरण

यह ग्रन्थ भी आशाकाजी वज्राचार्य के व्यक्तिगत संग्रह आशा आर्काइब्ज काठमांडू नेपाल से जीराक्स करके मँगाया गया है। इसका विवरण भी दुर्लभ ग्रन्थ परिचय, पृ० 197 में "ताराकल्प" नाम से दिया जा चुका है, केवल नाम में अन्तर है।

## 8. चक्रसंवरविवृतिः

**ग्रन्थ**—चक्रसंवरविवृति
**संख्या**—ल० सं० 3.720

**पत्रसंख्या**—1-153, **पंक्ति प्र० प०**—8, **अक्षर प्र० पं०**—42
**आधार**—ने० कागज, **लिपि**—नेवारी, **पूर्ण।**

**प्रारम्भ**

ॐ नमः श्री हेरुकाय। ॐ नमः श्रीचक्रसंवराय।
एवम्मया श्रुतमेकस्मिन् समये भगवान् सर्वतथागतकायवाक्चित्तवज्रयोषिद्भगेषु विजहार। तत्र खलु भगवानशीतिकोटियोगेश्वरमध्ये वज्रगर्भमवलोक्य स्मि (स्मित) मकार्षीत्। समनन्तरस्मिते तस्मिन् वज्रगर्भ उत्थायासनादेकाशमुत्तरासङ्गं कृत्वा दक्षिणजानुमण्डलं पृथिव्यां प्रतिष्ठाप्य कृताञ्जलिपुटो भूत्वा भगवन्तमेतदवोचत्। श्रोतुमिच्छामि ज्ञानेन्द्र सर्वतन्त्रनिदानं रहस्यं चक्रसंवरविवृतौ लक्षणम्। अहो वज्रगर्भ साधु महाकृप साधु साधु महाबोधिः साधु गुणाकर। यद्रहस्यं सर्वतन्त्रेषु तद्रहस्यं पृच्छतेच्छया॥

**अन्त**

इदमवोचद् भगवान् वज्रगर्भप्रमुखा अशीतिकोट्या च महाबोधिसत्त्वतथागतसंघनेकधा प्रीतिप्रह्लादचित्तस्तु सर्वतथागतज्ञानलाभिनस्तु देवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगादयः, सा च सर्वावती पर्षद् भगवतो भाषितमभ्यनन्दन्निति॥

**पुष्पिका**

इत्यार्यश्रीचक्रसंवरविवृतौ महातन्त्रराजे हूँकारनिर्गत ओडियानसपादलक्षादुद्धृतः समाप्तः॥

**विवरण**

इस ग्रन्थ की फोटोकापी राष्ट्रीय अभिलेखालय काठमांडू, नेपाल से शान्तरक्षित ग्रन्थालय में आई है, जिसके आधार पर यह विवरण दिया जा रहा है। यह टीका-ग्रन्थ है। मूल चक्रसंवर ग्रन्थ की मातृका अभी-तक कहीं से उपलब्ध नहीं हो पाई है। इसमें दिये गये प्रतीकों से प्रतीत होता है कि यह टीका ग्रन्थ है, वैसे ग्रन्थकार ने विषयों का विस्तृत विवेचन इस प्रकार और इतने विशद रूप में किया है कि यह स्वतन्त्र ग्रन्थ ही लगता है। श्री राहुल सांकृत्यायन जी की ग्रन्थसूची तथा न्यू कैटलागस कैटलागरम् के अनुसार इस टीका के रचनाकार **भवभट्ट** हैं, किन्तु प्रस्तुत मातृका में ग्रन्थकार का कोई नाम नहीं है।

**विषयनिर्देश**

इस ग्रन्थ में प्रतिपादित विषयों का निर्देश प्रत्येक पटल की अवान्तर पुष्पिका में दिया है, जो इस प्रकार है—

| | | |
|---|---|---|
| इति श्रीचक्रसंवरविवृतौ | नास्ति | |
| ,, ,, | विद्याकारचेतसापटलो द्वय(द्वि)पञ्चाशत्तमः | पत्र 145 |
| ,, ,, | संवेगविशुद्धिज्ञानगाथापटलस्त्रिपञ्चाशत्तमः | ,, 150 |
| ,, ,, | रत्नभोगिपटलालङ्कारगाथापटलश्चतुःपञ्चाशत्तमः | ,, 153 |

**9. चक्रसंवरपञ्जिका**

**ग्रन्थ**—चक्रसंवरपञ्जिका
**ग्रन्थकार**—जयभद्र
**संख्या**—MBB–II–75
**पत्रसंख्या**—62
**आधार**—ने० कागज, **लिपि**—देवनागरी, **पूर्ण ।**

**प्रारम्भ**

ॐ नमः श्रीहेरुकाय

सर्वभावस्वभावाग्रं सर्वभावं भयावहम् ।
सर्वभावनिराभासं सर्वभावविभावनम् ॥

तं प्रणम्य महावीरं खसमार्थं खनिर्मलम् ।
चक्रसंवरतन्त्रस्य लिख्यते पञ्जिका मया ॥

अत्र तन्त्रादौ एवंमयेत्यादिना सङ्गीतिकारेण कस्मादुपोद्घातेन कृत इति चोद्य-मन्तरा केचिद्रूपपरिज्ञानार्थं व्याचक्षते भगवतोऽप्रतिष्ठितनिर्वाणप्रदर्शनार्थमिति । एतदेव सर्वात्मनि सदा स्थित इति । अन्यत्र शतसाहस्त्रिकां खसमानमूलतन्त्रादुद्धृत-त्वादत्रैवादौ मूलतन्त्रे एवमित्यादिना निर्दिष्टत्वादत्र तदुत्तरतन्त्रेण कृतमिति ।

**अन्त**

कूष्माण्डमित्यादि । कूष्माण्डबीजं मुद्रा मायाशवलबीजानि स्वर्छादिमधुशिग्रुराजिका-समीकृतं यस्य नाम्ना मन्त्रेण चोदयित्वा तद्गृहैकदेशे लेपयेत्, यथोक्तं भवति ।

गुरूपदेशात् स्वमतेर्विकाशादकारि चेतोऽत्र मया समासात् ।
तत् शोध्यमार्यैर्यदि दुष्टमेतल्लक्ष्यन्ति मुह्यन्ति च खे भ्रमेण ॥

तदत्रमात्र...............साधनादौ विवृतिं तदज्ञो विदधाति नैव ।
तथाहि येभिनयन्ति रयना (?) पृथिव्यां द्विषन्ति हीनानि च कृष्णसूर्याः ॥

अनेन पुण्येन भवे भवेयं त्रिचक्रवीराधिपतेः समानः ।
इतस्तथा तेन च सर्वपापाद्विमुक्त एवास्तु सदा समस्तः ॥

कृतिरियं...............श्रीलङ्काजन्मभूरभूतस्य जयभद्राख्य[स्य] ख्यातः (तस्य) क्षान्तिं कुर्वन्तु वीरडाकिन्यः।

प्रख्याते श्रीमहाविश्वे सौगतानां समाश्रये।
चैत्यकर्म च आधारे प्रतिहार्यनिरन्तरे॥

विबुधाधिपकीर्तिहेतोस्ताराभवनस्थितिर्वति प्रवरे विहारे त्विह ग्रन्थः।
स एव रचितस्तुतिसाधने च तन्मण्डलावरणं सुविस्तरं च यत्॥
कृतिराचार्यजयभद्रस्य। ग्रन्थमानं मात्रं सप्तशत-अङ्काः श्लोकाः।

**पुष्पिका**

समाप्ता चेयं चक्रसंवरपञ्जिका।

**विवरण**

यह ग्रन्थ श्री जगन्नाथ उपाध्याय जी के व्यक्तिगत संग्रह से प्राप्त हुआ है, जिसे उन्होंने इण्डियन एडवांस स्टडी आफ वर्ल्ड रिलीजन्स, न्यूयार्क से प्राप्त माइक्रोफिस से प्रतिलिपि कराया है। उसी के आधार पर यह विवरण दिया गया है।

यह मूलतन्त्र की अत्यन्त संक्षिप्त टीका है, बीच-बीच में कुछ पद छूटे है, जहाँ.... यह रिक्तता का चिह्न दिया गया है। अन्तिम पत्र में जहाँ जयभद्र का परिचय है, मूलप्रति को ठीक से न पढ़ पाने से प्रतिलिपिक द्वारा अत्यन्त अशुद्ध हो गया है। इसमें पुष्पिकाओं में विषय निर्देश नहीं हैं, केवल 'प्रथमपटलव्याख्या' आदि लिखा है।

## 10. शुचीकरणम्

**ग्रन्थ**—शुचीकरण
**ग्रन्थकार**—काणेरि पाद
**संख्या**—13267
**पत्र संख्या**—1–5, **पंक्ति प्र० प०**—10, **अक्षर प्र० पं०**—38
**आधार**—कागज, **लिपि**-देवनागरी, **पूर्ण**।

**प्रारम्भ**

नमस्तारायै
स्नानशौचरता ये च भिक्षूपासकदूषकाः।
तेषां मोहोपशान्त्यर्थं युक्तिरेषोच्यतेऽधुना॥ 1॥

मलमूत्रादिभिर्व्याप्तं मेध्यादेव हि जायते ।
अतो मलमयं पिण्डं निर्मलीक्रियते कथम् ॥ 2 ॥

यद्यपि श्लाघ्यते नित्य [इ]ष्यते च पुनः पुनः ।
तथापि किं भवेद् देहे [विष्ठा]पूर्णो यथा घटः ॥ 3 ॥

पीयते पञ्चगव्यं च खाद्यते च निरामिषम् ।
तदप्यभ्यन्तरीभूतं विष्ठात्वं याति मूत्रताम् ॥ 4 ॥

यद्देहस्य विशुद्ध्यर्थं मुखे प्रक्षिप्यते जलम् ।
तदप्युच्छिष्टतां याति शुद्धिराचमनेन किम् ॥ 5 ॥

अन्त

न क्रिया न व्रतं तीर्थं न स्नानं देवार्चनम् ।
अद्वयज्ञानयुक्तानामेकमपि न तिष्ठति ॥ 96 ॥

नास्ति दोषः सुरां पीत्वा किञ्चिदस्ति फलं न च ।
तं भोगं चिन्तयेद् योगी येन मोक्षोपमो भवेत् ॥ 97 ॥

ज्ञानेन लभते मोक्षं ज्ञानं पुण्येन लभ्यते ।
पुण्यं चित्तविशुद्ध्यर्थं ज्ञानमप्यात्मप्रत्ययः ॥ 98 ॥

न च तद्दृश्यते पुष्पं न तद्गन्धो न तद्रसः ।
अप्रमेयं हि तद् ज्ञानं स्वयमेव स्वखादिवत् ॥ 99 ॥

क्रमादभ्यस्यमानत्वादात्मनैवोपलभ्यते ।
सर्वधर्मेषु·················हेतुवादि परं गुरुः ॥ 100 ॥

एतदपि यथा सर्वं यद्यच्च परिकीर्तितम् ।
कर्णशु( श्रु)तं यथा वस्तु तथा न दृश्यते पुनः ॥ 101 ॥

तावद्वहति पानीयं घटो यावन्न जर्जरः ।
जर्जरत्वं यदा याति वहति किं वहेत्पयः ॥ 102 ॥

देहमध्ये स्थितोऽप्यात्मा प्रदेशे कुत्र तिष्ठति ।
किं सु(स्व)रूपं किमाकारमिति कोऽपि न पश्यति ॥ 103 ॥

को वृद्धः कोऽथवा बालः सुखी दुःखी च को भवेत् ।
कथं जन्म कथं मृत्युः किं कोऽपि न पश्यति ॥ 104 ॥

**पुष्पिका**

इति कनेरिपाविरचितं शुचीकरणं समाप्तम् ।

**विवरण**

इस ग्रन्थ की फोटो प्रति ओरियण्टल इंस्टीट्यूट बड़ौदा से प्राप्त हुई है। इसमें केवल 104 श्लोक हैं और मन की शुद्धि ही मनुष्य को मोक्ष या बुद्धत्व प्राप्त करा सकती है, बाह्य शुद्धि नहीं, इस विषय का रोचक प्रतिपादन किया गया है। ग्रन्थ के रचयिता कणेरिपा एक प्रसिद्ध सिद्धों में गिने जाते हैं।

**11. अधिष्ठानमन्त्राः**

**ग्रन्थ**—अधिष्ठानमन्त्राः

**संख्या**— ×

**पत्रसंख्या**—4 ( 2 – 5 ), **पंक्ति प्र० प०**—5, **अक्षर प्र० प०**—30

**आधार**—नेपाली कागज, **लिपि**—नेवारी, **पूर्ण ?**

**प्रारम्भ—अन्त**

अत्राधिष्ठानमन्त्राः। ॐ सुप्रिये स्वाहा गन्धस्य। ॐ एँ स्वाहा पुष्पस्य। ॐ कूस्वाहा धूपस्य। ॐ कूं स्वाहा दीपस्य। ॐ इ स्वाहा नैवेद्यस्य। ॐ गुस्वाहा। वल्युपहारस्य। ॐ सर्वशोधनी हूं फट्॥ पूजाङ्कप्रोक्षणमन्त्रः। प्रसार्य चन्द्रसूर्यन्तु अङ्गुष्ठये वेष्ठितं। पक्षिपक्षाः कृत्वा हृदि स्थाने तु विन्यसेत्। ॐ वज्र-कवच ल हूं फट्। आत्मरक्षा। स त्वं वज्रीमाधाय भामर्या दिक्षु संवसेत्। प्राकारं कीलकं चापि मन्त्री कुर्याद्यथाक्रमम्। ॐ हॢ स्वाहा। वज्रमूर्ध्नि द्वयं कृत्वा भूच्छत्रा पद्मशृङ्खला। श्वेतारुणमुच्छ्रित्य परिवर्तोष्णीषचुम्बनम्॥ ॐ हॢं स्वाहा। वज्रबन्धं दृढं बध्वा भृमरायू समुत्थितः। श्वेतारोचनमुच्छ्रित्य वज्राकारेण योजयेत्॥ मूर्ध्ना लिलाटकर्णपृष्ठ ततो वामकर्णके वैरोचनादिबुद्धनामसु भावयेत्॥ अत्र वैरोचनादीनां स्वस्वबीजमन्त्राः। ॐ हॢं आ स्वाहा। वज्रमुष्टिद्वयं बद्ध्वा तर्जनीद्वयमुत्सृजेत्, आवर्तनं त्रिधा कुर्यात् हृदि पृष्ठे यथाक्रमम्॥ ॐ हॢं हॢं फट् स्वाहा। यं ता वरं(लं)बनं कृत्वा समतारेण तोषणाम्। वज्रतुष्ये होः कारान्तेन योजयेत्॥ इति रक्षाचक्रम्॥

ततः समाहितो मन्त्री सत्त्वपर्यङ्कसंस्थितम्। हृदये चन्द्रबिम्बं स्वबीजं पञ्चरश्मि-कम्। ध्यायेत्तद्रश्मिभिः पूर्णं त्रैधातुकविशेषतः॥ तेनानीतं भगवन्तमाकाशस्थं स्थापयेत् सुधीः। वज्राङ्कुशस्य मुद्राभिराकृष्य योजयेत्ततः॥ मुद्रायां वज्रपाशस्य सर्वदेवता। तासां च बन्धनं कुर्याद्वज्रस्फोटस्य मुद्रया॥ ॐ वज्रांकुश जः॥ आवा-

हनमुद्रामन्त्रः । ॐ स्मां स्वाहा । प्रोक्षणं । वज्रपाश ह्रं । प्रवेशनं । वज्रस्फोट वं । ॐ वज्रावेश होः । तोषणं, वज्रमुष्टिद्वयं बद्ध्वा भूतच्छत्रा·······तमङ्कुशी । वज्राङ्कुशस्य मुद्रेयं देवताकर्षणी धरा ।। सूर्यमुष्टिं समाधाय स्वेताज्ञानेन योजिता । कुशाग्रजलमादाय मुद्राप्रोक्षणिका मता ।। वामदक्षिणपाणिभ्यां बाहुग्रन्थिप्रयोगतः । प्राणमुद्रेति विख्याता सर्वबुद्धप्रकाशिता ।। वज्रमुष्टिद्वयं बद्ध्वा श्वेतारोचन-शृङ्खला । स्फोटमुद्रेति विख्याता योगिनीभिः प्रशंसिता ।। वज्रमुष्टिद्वयं बद्ध्वा पृष्टपूजेन योजिता । वज्रावेशेति विख्याता·······तोषणे मता ।। सूर्यमुष्टिं समाधाय स्वेताज्ञानेन योजयेत् । परिवर्त्याच्छतोशेषा पादाषपरिकीर्तिता ।। ॐ या ए वर-सत्कारं प्रतीच्छ स्वाहा । पाद्योदकं च दद्यात् ।। सत्त्ववज्रीं समाधाय स्वेता-रोचनकुञ्चिता । ज्ञानकं चुम्बमानमुद्रा प्रकीर्तिता ।। ॐ प्रतीच्छाशे हूं स्वाहा । तत आचमनं च देयम् । ततो योगाम्बरं नाथं परिवारसमन्वितम् । पूजयेत् सर्वपूजाभिर्गन्धाद्यैरुपचारकैः ।। लास्या वीणा तथा गीता नृत्या मुद्राचतुष्टयम् । गन्धा पुष्पा तथा धूपा दीपा नैवेद्यका परा ।। चन्द्रसूर्याविभौ उष्णीषकटिपार्श्वेषु प्रेरणात् । वामाङ्गमवनं कृत्वा लास्यामुद्रा विधीयते ।। ॐ हूँ स्वाहा । वामेन करणं कृत्वा वीणाकारं समुत्थिता । उल्लत्य सूर्यं तेन वीणामुद्रा प्रकीर्तिता । ॐ हूँ क्षूं हूँ हूँ स्वाहा । दक्षिणकटिदेशात्तु वामहस्तं तु विक्षिपेत् । ऊर्ध्वतः सूर्यहस्तं तु नृत्याकारेण बन्धयेत् । ॐ भू नृत्य हूं स्वाहा । कण्ठे ह्रीं कारणं पद्मं दलाग्रे चन्द्रमण्डलम् । तस्य मध्ये तु हूं कारं तेन तं विभावयेत् । ॐ अ जिह्वासंवर्तनि हूं फट् । इति जिह्वाशोधनम्, रक्त अ जात चन्द्रसूर्यबिम्ब-मरजकम् । वामे सकलसंभूतचन्द्रोपमं भावयेत् । श्वेतधूमाख्यपद्मेन मन्त्रयुक्तेन मन्त्रिणा ।। ॐ प्रवर सत्कारं प्रतीच्छ हूं स्वाहा ।। इति शङ्खाधिष्ठानम् । मन्त्रस्वजुस्वकश्चैव मुद्राभिश्च तथैव च । मन्त्री कुर्यादधिष्ठानं गवादीनां यथाक्रमम् ।।

**पुष्पिका**

नहीं है ।

**विवरण**

ये प्रकीर्ण पत्र चतुष्पीठतन्त्रटीका के साथ माइक्रोफिश में आये हैं, उक्त ग्रन्थ के साथ इनका कोई सम्बन्ध नहीं है । **'अधिष्ठानमन्त्राः'** यह शीर्षक देकर इन्हें स्वतन्त्र रूप से लिखा गया है । उपयोगी समझ कर हमने सम्पूर्ण ग्रन्थ यहाँ दे दिया है । यह इतने में ही पूर्ण है या नहीं, यह भी निर्णीत नहीं है ।

# लुप्त बौद्ध वचन संग्रह

—डॉ० बनारसी लाल—

[ 'धीः' के पूर्व अंकों में इस स्तम्भ के अन्तर्गत तन्त्र-ग्रन्थों में प्राप्त अवान्तर ग्रन्थों के वचनों को संगृहीत किया जाता रहा है। प्रस्तुत अंक में कालचक्रतन्त्रटीका विमलप्रभा के तृतीय तथा चतुर्थ पटल में प्राप्त अवान्तर ग्रन्थों के वचनों को उद्धृत किया गया है। विमलप्रभा के प्रथम खण्ड में दो पटल प्रकाशित हो चुके हैं, जिसमें से उक्त सामग्री संकलित कर पूर्व अंकों में प्रकाशित कर दी गई है। तृतीय एवं चतुर्थ पटल का हस्तलेख योजना-कार्यालय में उपलब्ध है, जिसका शीघ्र ही द्वितीय खण्ड के रूप में प्रकाशन होगा। इसमें 'क' संज्ञक पाण्डुलिपि के पृष्ठों का अंकन तथा सुविधा के लिये हस्तलेख के पृष्ठों को भी कोष्ठ में दर्शाया गया है। इस ग्रन्थ के सम्बन्ध में और अधिक परिचय 'धीः' सातवें अंक में दिया गया है। ]

### [1]आचार्यपरीक्षा

(१)

[2]दशतत्त्वपरिज्ञानात् त्रयाणां भिक्षुरुत्तमः।
मध्यमः श्रामणेराख्यो गृहस्थस्त्वधमस्तयोः॥

तथा—

न कर्तव्यो गुरुराज्ञा भूमिलाभं विना गृही।
तत्र श्रुतपरिज्ञानैर्लिङ्गी कर्तव्य एव यः॥

भूमिलाभं विनाचार्यो गृहस्थः पूज्यते यदा।
तदा बुद्धश्च धर्मश्च संघो गच्छत्यगौरवम्॥

तथा—

विहारादेः प्रतिष्ठाद्यं कर्तव्यं लिङ्गिना सदा।
सत्सु त्रिष्वेकदेशे च न गृहिणा श्वेतवासिना॥

1. आचार्यपरीक्षा नाम का कोई स्वतन्त्र ग्रन्थ न होकर यह किसी ग्रन्थ का परिच्छेद प्रतीत होता है।

2. विमलप्रभा ( वि० प्र० ) 163 a ( 3 688 )

(२)

[1]भिक्षया रक्तवस्त्रेण त(ल)ज्जा यस्य दुरात्मनः।
वन्द्यः पूज्यः स रण्डानां बौद्धानां नष्टमार्गिणाम्॥

रक्ताम्बरं यदा दृष्ट्वा द्वेषं गच्छन्ति पापिनः।
म्लेच्छधर्मरता बौद्धास्तथा(दा) श्वेताम्बरप्रियाः॥

## आदिबुद्ध

(१)

[2]चित्तमण्डलं द्वादशहस्तं प्रकुर्यादिति।

(२)

[3]पातनं वज्रसूत्राणां रजसोऽपि निपातनम्।
न कुर्यान्मन्त्रतत्त्वेन कुर्वतो बोधि दुर्लभः॥

(३)

[4]यो गृही मठिकाभोक्ता सेवको लाङ्गली वणिक्।
सद्धर्मविक्रयी मूर्खो न स वज्रधरो भुवि॥

(४)

[5]कर्ममुद्राप्रसङ्गेऽपि ज्ञानमुद्रानुरागणे।
रक्षणीयं महासौख्यं बोधिचित्तं दृढव्रतैः॥

भगे लिङ्गं प्रतिष्ठाप्य बोधिचित्तं न चोत्सृजेत्।
भावयेद् बुद्धबिम्बं तु त्रैधातुकमशेषतः॥

---

1. वि० प्र० 164 a ( 3.692 )
2. वि० प्र० 170 a ( 3.718 )
3. आदिबुद्ध के नाम से उद्धृत ये वचन गुह्यसमाजतन्त्र के हैं, जो किंचित् पाठभेद के साथ उपलब्ध हैं। देखें—गुह्यसमाजतन्त्र, गा० ओ० सी० नं० 53, पृ० 115, वि० प्र० 162 a ( 3.682 )
4. वि० प्र० 163 a ( 3.688 )
5. वि० प्र० 225 b ( 3.958-59 )

अनेन रक्षितेनैव बुद्धत्वमिह जन्मनि ।
शीलसंभारं सम्पूर्णं पुण्यज्ञानसमन्वितम् ॥

दशपारमिताप्राप्ताः सम्बुद्धास्त्र्यध्ववर्तिनः ।
अनेन सर्वसम्बुद्धैर्धर्मचक्रं प्रवर्तितम् ॥

अतः परतरं नास्ति ज्ञानं त्रैधातुकेश्वरम् ।
शून्यताकरुणाभिन्नं स्वपरार्थप्रसिद्धये ॥

यदि पालयसि मे पुत्र संवरं सर्वतायिनाम् ।
तदा लप्स्यसि संबोधिं सर्वबुद्धैरधिष्ठितः ॥

अथ रागाभिभूतात्मा न पालयसि संवरम् ।
गृहीत्वा पुरतो भर्तुस्तदा यास्यसि रौरवम् ॥

मृदुचित्ताद्यदा योनौ बोधिचित्तं च्युतं भवेत् ।
पद्मबाह्यं तदा ग्राह्यं ज्ञात्वा मुद्रां स्वजिह्वया ॥ इति ।

( 5 )

[1]दिनं सूर्यो रजो वज्रां( ज्रं ) भावभेदैर्निशा शशी ।
शुक्रं पद्मं तयोरैक्यं कालचक्रं महासुखम् ॥ इति ।

## मूलतन्त्र

( 1 )

[2]इह यत्र मण्डलादिकर्म कर्तव्यं तत्र यदि कर्मानुरूपतो भूमिर्न भवति, तदा खानि-मुदकान्तं शिलान्तं वा खनेत्, ततोऽपरमृत्तिकया खानि पूरयेत् कर्मानुरूपतः । अतो भूगन्धार्थं श्वेतमृत्तिकां चन्दनोदकेन भावयेत्, रक्तमृत्तिकां पद्मोदकेन रक्तचन्दनोदकेन भावयेत्, पीतमृत्तिकां खराश्वमनुष्यमूत्रेण भावयेत्, कृष्णमृत्तिकां पूतिमांसतोयेन भावयेत् । रसास्वादनार्थं कृष्णायां लवणाम्बु क्षेपयेत् । पीतायां गुडम्, रक्तायां कटुकम्, श्वेतायां तिक्तं कषायं चेति । हरितायां सर्वकर्मकरत्वान्न किञ्चित् क्षेपणीयम् । तथा भूमिगर्भे निधापनीयम् । कृष्णायां मानुषास्थि मारणे, काकपिच्छमुच्चाटने, विद्वेषे खरास्थीनि, पीतायां कीलने मेषशृङ्गम्, स्तम्भने हरितालम्, मोहने

1. वि० प्र०-251 b ( 4.1063 )
2. वि० प्र०-166 a-b ( 3.702-703 )

सर्पम्, रक्तायां वश्ये गोरोचनम्, आकृष्टौ हिङ्गुलम्, स्तोभे मनःशिलाम्, श्वेतायां शान्तौ स्फटिकम्, पुष्टौ शङ्खम्, ज्वरापहरणे दाहे मुक्ता इति। हरितायां न किञ्चिदपि क्षेपणीयम्।

( 2 )

[1]मारणे नरकपालानि श्मशानाङ्गारचूर्णेन नरवसया लिप्य कृष्णानि कारयेदिति। उच्चाटने विद्वेषे दीर्घग्रीवा अष्टाङ्गुलवक्त्राः (वक्राः) कृष्णाङ्गा वृत्तेन द्वादशाङ्गुलाः, उच्छ्रयेण चतुर्विंशत्यङ्गुलाः, अङ्गुलैकौष्ठाः षडङ्गुलास्या इति। वश्याकर्षणे यथा शिल्पिना घटिता लोकव्यवहारेणेति, स्तम्भने सर्वा वृत्तोच्छ्रयेण तुल्याः षोडशाङ्गुलाश्चतुरङ्गुलग्रीवाः षडङ्गुलास्याः स्थूलौष्ठा अङ्गुष्ठद्वयेनेति।

( 3 )[2]

[3]गन्धकक्षपुटे राजन्नोषधीः पातयेत् क्रमात्।
नेत्रेन्द्वग्न्यादिभिर्भागैर्ब्राह्म्याद्याः पञ्चपञ्चकैः॥

ब्राह्मी नारायणी रौद्री ईश्वरी परमेश्वरी।
ऐन्द्री लक्ष्मी च वाराही कौमारी चर्चिका तथा॥

पार्थिवी वारुणी ज्योतिर्वायवी खेचरी तथा।
माता च भगिनी पुत्री भागिनेया स्वजा तथा॥

ब्राह्मणी क्षत्रिणी वैश्या शूद्री डोम्बी तथा स्मृता।
इत्यौषध्यो महासिद्धिभुक्तिमुक्तिप्रदाः सदा॥

( 4 )[4]

[5]भागिनेया दुहित्री च भगिनी जननी तथा।
भार्याया जननी चैव मातुलस्य तथाङ्गना॥

---

1. वि० प्र० 168 a ( 3.710 )
2. सेकोद्देशटीका, पृ० 7 में भी यह वचन मूलतन्त्र के वचन के रूप में उद्धृत है, जिसे इसी स्तम्भ के अन्तर्गत 'धीः' 7 वें अंक के पृष्ठ 40 पर संगृहीत किया गया है।
3. वि० प्र० 216 a ( 3.914–915 )
4. सेकोद्देशटीका , पृ० 23 पर भी ये वचन उद्धृत हैं, जिसे 'धीः' के 7 वें अंक के पृ० 40–41 पर संगृहीत किया गया है।
5. वि० प्र० 224 a-b ( ?.952–953 )

पितृभ्रातुस्तथा भार्या भगिनी जनकस्य तु।
स्वमातुर्भगिनी चैव स्वभार्या वररूपिणी ॥

ताराद्या धर्मधात्वन्ता दशविद्याः स्वगोत्रजाः।
सेककाले प्रदातव्या गृहिणा मोक्षकाङ्क्षिणा ॥

न ददाति गुरोर्विद्या यद्येताः कुलरक्षणात्।
तदा सेको न दातव्यः अन्याभिर्गृहवासिनाम् ॥

मण्डलेष्वभिषिक्ताभिरन्याभिः शूद्रजातिभिः।
भिक्षुणां श्रामणेराणां दातव्यो गुरुणा नृप ॥

वाय्वाद्यास्तु क्रमात् शूद्री क्षत्रिणी ब्राह्मणी तथा।
वैश्या डोम्बी च कैवर्ती नटिका रजकी तथा ॥

चर्मकारी च चण्डाली धर्मधात्वन्त्यजा दश।
महाविद्याः समाख्याता भुक्तिमुक्तिफलप्रदाः ॥

( ५ )

[1]बुद्धधर्ममहासंघैश्चित्तवाक्कायमण्डलम् ।
चतुर्ब्रह्मविहारैश्च वज्रसूत्रचतुष्टयम् ॥

चतुर्भिः स्मृत्युपस्थानैश्चतुरस्रं समन्ततः।
द्वादशाङ्गनिरोधेन द्वाराणि द्वादशानि च ॥

भूमिभिर्द्वादशैस्तद्वत् तोरणानि शुभानि च।
आर्याष्टाङ्गिकमार्गैश्च श्मशानान्यष्टदिक्षु च ॥

शून्यता षोडश स्तम्भाः कूटागारं च धातुभिः।
निर्यूहाष्टविमोक्षैश्च रूपिभिश्चाष्टभिर्गुणैः ॥

कपोलाः पक्षकाश्चैव चित्तवाक्कायभेदतः।
शीलादिपञ्चभिः स्कन्धैः पञ्चवर्णं विशोधितम् ॥

त्रिप्राकारां त्रियानैश्च पञ्च श्रद्धेन्द्रियादिभिः।
श्रद्धादिभिर्बलैः पञ्च चित्तवाक्कायमण्डले ॥

1. वि० प्र० 255 a ( 4.1079–1081 )

समाधिधारिणीभिश्च वेदिका मण्डलत्रये ।
दशपारमितापूर्णैर्विचित्रा रत्नपट्टिका ॥

हारार्द्धा वेणिका धर्मैरष्टादशभिरेव ते ।
वकुली वशिताभिश्च कुशलैः क्रमशीर्षकम् ॥

शून्यतादिविमोक्षैश्च घण्टादिध्वनिपूरितम् ।
ऋद्धिपादैर्ध्वजाकीर्णं प्रहाणैर्दर्पणोज्ज्वलम् ॥

बोध्यङ्गैश्चामरोद्धूतं नवाङ्गैः स्रग्दाममण्डितम् ।
चतुर्भिः सग्रहैः कोणं विश्ववज्रैरलङ्कृतम् ॥

खचितं सत्यचतूरत्नैर्द्वारनिर्यूहसन्धिषु ।
पञ्चाभिज्ञामहावलयैर्वेष्टितं पञ्चभिः सदा ॥

सर्वाकारज्ञता बोध्यङ्गं वज्रावल्या सुवेष्टितम् ।
सुखैकचक्रवाटेन ज्ञानवज्रार्चिषा तथा ॥

प्रज्ञोपायविभागेन चन्द्रसूर्यसदोदितम् ।
चित्तवाक्कायसंशुद्धं धर्मचक्रं महाघटम् ॥

दुन्दुभिर्बोधिवृक्षश्च तच्चिन्तामणिकादिकम् ।
एतत् श्रीकालचक्रस्य मण्डलं धर्मधातुकम् ॥

सर्वसम्पत्करं ध्यात्वा आदिकाद्यं ततो न्यसेत् ।

( ६ )

[1]बुद्धक्षेत्रेषु ये सत्त्वास्त्रिकायसमयामृतैः ।
जाता वज्रश्रिया स्पृष्टाः सर्वे तत्र तथागताः ॥

अभूवन्निह सम्बुद्धास्त्रिवज्रज्ञानलाभिनः ।
भावयित्वा ततस्तांश्च स्वस्वक्षेत्रे प्रवेशयेत् ॥

( ७ )

[2]लोचनो(ना)ऽहं जगन्माता निष्यन्दे योगिनां स्थिता ।
मे मण्डलस्वभावेन कालचक्रोत्थ काम माम् ॥

---

1. वि० प्र० 267 a (?) ( 4.1136 ) । यह वचन विमलप्रभा को 'क' संज्ञक प्रति में उपलब्ध नहीं है । सम्भवतः वहाँ उक्त अंश छूट गया है ।

2. वि० प्र० 268 b ( 4.1139-1140 )

मामकी भगिनी चाहं विपाके योगिनां स्थिता।
मे मण्डलस्वभावेन कालचक्रोत्थ काम माम् ॥

पाण्डरा दुहिता चाहं पुरुषे योगिनां स्थिता।
मे मण्डलस्वभावेन कालचक्रोत्थ काम माम् ॥

तारिणी भागिनेयाहं वैमल्ये योगिनां स्थिता।
मे मण्डलस्वभावेन कालचक्रोत्थ काम माम् ॥

शून्यमण्डलमादाय कायवाक्चित्तमण्डलम्।
स्फारयस्व जगन्नाथ जगदुद्धरणाशय ॥ इति।

(८)

[1]षोडशाब्दां कुलीनां वा रूपयौवनमण्डिताम्।
आदौ सुशिक्षितां कृत्वा सिक्त्वा साधनमारभेत् ॥

कायवाक्चित्तरागांश्च ललाटादिषु विन्यसेत्।
स्वाहा गुह्ये महोष्णीषे ततः पद्मं विशोधयेत् ॥

आःकारेणाष्टदलं पद्मं हूंकारकुलिशान्वितम्।
एवं सकुलिशं कमलं प्रज्ञायाः स्पन्दहेतुतः ॥

हूंकारेण स्वकं वज्रं पञ्चसूकं विभावयेत्।
तन्मध्ये अष्टदलं पद्मं आःकारेण प्रकल्पयेत् ॥

एवं सकमलं कुलिशं कृत्वा पद्मे निवेशयेत्।
हूंफट्कुर्वंस्ततो योगी गर्वं वज्रधरं वहन् ॥

भगे लिङ्गं प्रतिष्ठाप्य बोधिचित्तं न चोत्सृजेत्।
भावयेद् बुद्धबिम्बं तु त्रैधातुकमशेषतः ॥

चण्डाली ज्वलिता नाभौ दहति पञ्च तथागतान्।
लोचना चक्षुरादींश्च दग्धेऽहं श्र(स्र)वते शशी ॥

श्र(स्र)वते बिन्दुरूपेण अमृतं शुक्ररूपिणम्।
बिन्दुयोग इति ख्यातः षोडशार्द्धार्द्धबिन्दुधृक् ॥

---

1. वि० प्र० 283 b–284 a ( 4.1207–1209 )

सूक्ष्मयोग इति ख्यातो निःस्पन्दादिगतोर्ध्वतः ।
शङ्खिनीयं महामुद्रा चण्डाली सा प्रगीयते ॥

नाभ्यूर्ध्वं डोम्बिनी या तु अवधूती नरनासिका ।
पञ्चरश्मिमयः प्राणः पञ्चमण्डलवाहकः ॥

नासाग्रे सर्षपः ख्यातः प्राणायामः स च स्मृतः ।
त्रिभवस्य परिज्ञानं त्रैधातुकमशेषतः ॥

प्राणे निबोधिते तच्च सर्षपे सचराचरम् ।
प्रत्याहारे महामुद्रा आकाशे शून्यलक्षणम् ॥

नासिका तत्प्रदेशे च यत्रैवारोपितं मनः ।
निमित्तान्ते तु या रेखा तस्यां विश्वं चराचरम् ॥

भावयेदखिलं तस्यां योगी ध्यानादिकं च तत् ।

( 9 )

[1]मध्यमोत्तमश्वासेन गन्धोदकयुतेन च ।
कुलिकां पूजयेन्नित्यं कालविशेषेण दूतिका ॥

( 10 )

[2]न मेघवृष्टिः प्रविशति वर्षमाणापि ।

( 11 )

[3]अकुहकाश्च ये कण्ठ्याः स्वरव्यञ्जनलक्षणाः ।
शून्यं वाय्वादिधातूनां मित्रत्वेन सदा स्थिताः ॥

इचुयशाश्च तालव्याः स्वरव्यञ्जनलक्षणाः ।
वायुधातुसमुद्भूताः शत्रवस्तोयजन्मिनाम् ॥

ऋटुरषाश्च मूर्द्धन्याः स्वरव्यञ्जनलक्षणाः ।
तेजोधातुसमुद्भूताः शत्रवो भूमिजन्मिनाम् ॥

1. वि० प्र० 285 a ( 4.1214 )
2. वि० प्र० 298 a ( 4.1271 )
3. वि० प्र० 301 a–b ( 4.1286–1287 )

उपु-पाश्च ये चौष्ठ्याः स्वरव्यञ्जनलक्षणाः ।
तोयधातुसमुद्भूताः शत्रवो वह्निजन्मिनाम् ॥
लतुलसाश्च ये दन्त्याः स्वरव्यञ्जनलक्षणाः ।
पृथिवीधातुसमुद्भूताः शत्रवो वायुजन्मिनाम् ॥
वायोर्मित्रं सदा शून्यमुदास्यं वायुशक्तितः ।
तोयस्य मेदिनी मित्रमुदास्योऽग्निरशक्तितः ॥
पृथिव्या उदकं मित्रमुदास्यो वायुरेव च ।
प्रणवं वर्जयित्वा तु मन्त्रस्याद्यक्षरं कुलम् ॥
चित्तं तदेव मन्त्राणां बिम्बनिष्पत्तिकारणम् ।
अन्यव्यञ्जनसंयुक्तं मन्त्रस्याद्यक्षरं यदा ॥
तदा पूर्वं तयोर्ग्राह्यं प्रथमोच्चारहेतुतः ।
स्वरव्यञ्जनभेदेन तदेव द्विविधं भवेत् ॥
प्राणस्य शत्रुर्मित्रं च कायस्यापि निगद्यते ।
प्राणस्य शत्रवो मित्रा उदास्या व्यञ्जनात्मकाः ॥
स्वरः शत्रुर्हरेत् प्राणं साधकस्य न संशयः ।
रोगाद्यं कुरुते काये शत्रुर्व्यञ्जनलक्षणः ॥
एकवर्गेऽपि ये पञ्चकाद्या व्यञ्जनधर्मिणः ।
पृथिव्यादि कुलं तेषां ज्ञातव्यं मन्त्रसाधने ॥
ङ ञ ण म न नित्येते मित्रा वाय्वादिजन्मिनाम् ।
घ झ ढ भ ध धित्येते शत्रवस्तोयजन्मिनाम् ॥
ग ज ड ब द दित्येते शत्रवो भूमिजन्मिनाम् ।
ख छ ठ फ थ थित्येते शत्रवो वह्निजन्मिनाम् ॥
क च ट प त तित्येते शत्रवो वायुजन्मिनाम् ।
मन्त्रादौ संस्थितो वर्णः स्ववर्गेऽपि परेऽपि वा ॥
साधकानां द्विधा वर्णो जन्मजो नामजो भवेत् ।

( 12 )

[1]मन्त्रादिव्यञ्जनानां वा स्वराणां साधनाय च ।
कर्मास्य षड्विधं प्रोक्तं सेवाजापं प्रकुर्वताम् ॥
प्रथमं ताडनं कुर्यादावेशं दाहनं ततः ।
आप्यायनं ततो मन्त्री पोषणं तोषणं ततः ॥
सविसर्गेण शून्येनाक्रान्तो मन्त्रपूर्वकः ।
मूर्च्छावस्थामवाप्नोति अस्त्रराजेन ताडितः ॥

1. वि० प्र० 301 b–302 a ( 4.1288–1290 )

लक्षजापेन चित्तस्य मूर्च्छिता मन्त्रदेवता।
अहङ्कारपरित्यक्ता साधकस्य वशी भवेत्॥
एवं सा वायुनाक्रान्ता आवेशं याति योगिनः।
दह्यते वह्निनाक्रान्ता तोयेनाप्यायते तथा॥
पृथ्वीमूर्ध्नि स्थिता पुष्टिं जप्ता गच्छति देवता।
मूर्ध्नि बिन्दुकलाक्रान्ता तोषिता वरदा भवेत्॥
एवं षड्लक्षजापेन पूर्वसेवा निगद्यते।
आदिबुद्धे महातन्त्रे सुगतेनेष्टसिद्धये॥
फट्कारो हूँ तथा वौषड् नमः स्वाहा वषट् तथा।
षट् कर्माणि यथासंख्यं मन्त्रान्ते कारयेद् व्रती॥
आदौ वैरोचनं दत्त्वा पुनर्जापं समारभेत्।
कोटिजापं ततः कृत्वा होमं कुर्याद्दशांशिकम्॥
तन्त्रोक्तविधिना सर्वं ततः सिद्ध्यति देवता।
वरं ददाति सा सिद्धा मन्त्रिणां प्रार्थितं च यत्।
पुस्तकात् पठितैर्मन्त्रैः संप्रदायविवर्जितैः।
साधनं ये प्रकुर्वन्ति ते क्लिश्यन्ति नरा भुवि॥
किं नाम संप्रदायं तत् पुस्तकाद्यदि लभ्यते।
तथा लिखितपाठेन नेयार्थेन प्रकाशितम्॥
आकाशं भोक्तुमिच्छन्ति मन्त्रसद्भाववर्जिताः।
पुस्तकात् पठितैर्मन्त्रैर्देवादीनां च साधकः॥
स्वचित्तदृढवीर्येण मन्त्रजापेन वा भवेत्।
ईप्सिता लौकिकी सिद्धिः साधकानां परार्थिनाम्॥
मन्त्रजापैस्तथा होमैश्चैत्यपूजाविधिक्रमैः।
क्रियाहीना न सिद्ध्यन्ति यथाभूतमिदं वचः॥
शास्तॄणां बोधिसत्त्वानां देवानां साधनं प्रति।
तस्मात् सर्वप्रयत्नेन तदेव गृह्यते बुधैः॥

(१३)

[1]यमराजा सदोमेय यमेदोरुण योदय।
यदयो निरयक्षे य यक्षे यच्च निरामय॥

●

1. वि० प्र० 306 a (4.306)

मूलतन्त्र का यह वचन कृष्णयमारितन्त्र (1.6) के इस वचन से तुलनीय है—

यमध्ये क्षे स मं द य च नि राजा स दो रुण यो नि रः।
रेफस्यादिर्यमघ्नः स्यात् क्षेकारे मोह उच्यते॥

# बौद्ध पारिभाषिक शब्दों का अभिप्राय

— ठिनलेराम शाशनी —

[ 'धीः' के पिछले 11 अंकों में इस स्तम्भ के अन्तर्गत अनेक बौद्ध-तन्त्र ग्रन्थों से विशिष्ट पारिभाषिक शब्दों की व्याख्याएँ संकलित की गई हैं। प्रस्तुत अंक में "कल्किश्रीपुण्डरीकविरचित लघुकालचक्रतन्त्रराज की टीका विमलप्रभा" के तृतीय तथा चतुर्थ पटल की हस्तलिखित पाण्डुलिपि से पारिभाषिक शब्दों को संकलित किया गया है। "विमलप्रभा द्वितीय भाग" के रूप में इस ग्रन्थ का सम्पादन दुर्लभ बौद्ध ग्रन्थ शोध योजना द्वारा इसी संस्थान से होरहा है। यह विदित है कि स्व० जगन्नाथ उपाध्याय जी द्वारा सम्पादित इस ग्रन्थ का प्रथम तथा द्वितीय पटल विमलप्रभा प्रथम भाग, भोट-भारतीय-ग्रन्थमाला–11 के अन्तर्गत केन्द्रीय उच्च तिब्बती शिक्षा संस्थान, सारनाथ द्वारा ही प्रकाशित है। संकलित पारिभाषिक शब्दों का निर्देश पाण्डुलिपि की पत्रसंख्या के आधार पर किया गया है। ]

**अकुशलानि ( दश )**

ततो दशाकुशलपरित्यागं विभावयेत्। प्राणातिपातमदत्तादानं काममिथ्याचारं मृषावादं पारुष्यं पैशुन्यं संभिन्नप्रलापम् अभिध्यां व्यापादं कुदृष्टिं चेति।

( वि० प्र०, 253 a )

**अक्षोभ्यः**

सिंहश्चैकान्तवासो विषयविरहितो निर्भयस्त्यागशीलोऽक्षोभ्य इति।

( वि० प्र०, 231 b )

अक्षोभ्यः सिंहः। ( वि० प्र०, 231 b )

ततः सर्वाङ्गावयवपरिपूर्णं विज्ञानं हूँकारान्वितं सुविशुद्धर्मधातुज्ञानम्, विज्ञान-स्कन्धजनकोऽक्षोभ्यः। ( वि० प्र०, 256 a )

**अतिगुप्तः**

लब्धे तत्त्वे यावत् स्वतोऽनुभवो न भवति, तावद् गुप्तोऽतिगुप्त इति।

( वि० प्र०, 164 b )

**अध्यात्मपीठानि**

अध्यात्मपीठादि संज्ञोच्यते................ इह समयमेलापके पीठं सर्वत्र स्त्रीपद्मं भवति। उपपीठशब्देन पुरुषवज्रं भवति। एवं स्त्रीणां षडायतनं क्षेत्रं पुरुषाणा-मुपक्षेत्रम्। तथा स्त्रीणां समानवाय्वष्टकं छन्दोहम्, पुरुषाणामुपछन्दोहम्।

एवं स्त्रीणां जिह्वालम्बनं करद्वयं पादद्वयं पायुसव्येतरनाडीद्वयं मूत्रशुक्रनाडी-द्वयमेतत् कर्मेन्द्रियदशकं मेलापकम्, पुरुषाणामुपमेलापकम्। एवं घ्राणद्वये मेढे, मलनिर्गमं श्रोत(त्र)द्वये चक्षुर्द्वये मुखे गुदे च एवं श्मशानाष्टकं स्त्रीणां पुरुषाणामुपश्म-शानमिति समस्तम्। तथोभयशरीरे प्रत्येकपीठं वामाङ्गं पूर्वम्। उपपीठं पश्चिमं दक्षिणाङ्गम्। एवं द्विधा पीठम्। तथा वामेन्द्रियसमूहं क्षेत्रम्। दक्षिणे-न्द्रियसमूहमुपक्षेत्रम्। एवं कूर्मकृकरदेवदत्तधनञ्जयचतुष्कं छन्दोहम्। समानोदान-व्याननागसमूहमुपछन्दोहम्। तथा वामे कर्मेन्द्रियसमूहं मेलापकम्। तथा दक्षिणे कर्मेन्द्रियसमूहमुपमेलापकम्। वामकर्णादिच्छिद्रमलनिर्गमं श्मशानम्। दक्षिणमुप-श्मशानमिति तथा करचरणादिगतमपरविशुद्ध्या। पूर्वं वामाङ्गं पीठम्। दक्षिणं पश्चिममुपपीठम्। तथा वामबाहुसन्धिर्वामोरुकटिसन्धिः क्षेत्रम्। दक्षिणमुप-क्षेत्रम्। वामोपबाहुसन्धिर्जानुसन्धिश्छन्दोहम्। दक्षिणमुपछन्दोहम्। तथा करपादसन्धिद्वयं वामे मेलापकं दक्षिणमुपमेलापकम्। वामाङ्गुलिनखानि श्मशानम्। दक्षिणमुपश्मशानम्। अथवा उभयबाहुसन्धिद्वयं क्षेत्रम्। उरुसन्धिद्वयमुपक्षेत्रम्। एवं छन्दोहादिकमपि करचरणगतमपि चाङ्गुलिकान्तसीम्न इति समयमेलापके। पीठादिसमयसंज्ञा योगिना वेदितव्या। ( वि० प्र०, 238 a–238 b )

**अनुस्मृतिः**

चण्डाल्यालोकनं यत्त्रिभवस्याम्बरे साऽनुस्मृतिर्दशविधा प्रोक्ता।

( वि० प्र०, 286 b )

**अभिषेकाग्रलब्धः**

इह कलशगुह्यप्रज्ञाज्ञानाभिषेकाणामग्रतो महामुद्राप्रज्ञापारमितामहाक्षरसुखक्षणाना-मन्तिमोऽभिसंबोधिलक्षणोऽच्छेद्यः, स येन भगवता बोधि[वृक्षे]मूले लब्धोऽसौ अभिषेकाग्रलब्धः। ( वि० प्र०, 163 b )

**अभिषेकाः ( सप्त )**

सेकविशुद्धिरुच्यते............इह तोयाभिषेको यः स वाय्वादिपञ्चधातुविशुद्धिर्निरावर-णेति। एवं मुकुटाभिषेको विज्ञानादिपञ्चस्कन्धविशुद्धिः। वीरपट्टाभिषेको दानादयो दशशक्तयः पारमितापरिपूरणायेति। वज्रवज्रघण्टाभिषेको ललनारसनाविशुद्धिः। चन्द्रादित्यनिरावरणतेति। व्रताभिषेको रूपादिविषयचक्षुरादीन्द्रियविशुद्धिः। दिव्यचक्षुरादिप्रवृत्तिरिति। नामाभिषेको मैत्र्यादियोगश्चतुर्ब्रह्मविहारेण सर्वकालं

रागद्वेषादिविशुद्धिः, निरावरणतेति। आज्ञाभिषेकः सम्बोधिलक्ष्मीर्धर्मचक्रप्रवर्तने धर्मदेशना। सा च भवभयमथनी परोपकारतः, कालचक्रानुविद्धा अच्युतसुखानुविद्धा शून्यतादेशनेति नियमः। एवं वै( चै )ते सप्ताभिषेकाः कलुषमलापहरा मण्डले संप्रदेयाः। ( वि० प्र०, 219 a )

**अमिताभः**

स्तब्धाक्षो मन्दगामी प्रकृतिगुणजडी मत्स्यगन्धो वृषः स्यादित्यमिताभः।
( वि० प्र०, 232 a )

अमिताभो वृषभः। ( वि० प्र०, 231 b )

प्रत्यवेक्षणा गन्धर्वसत्त्वं हूंकारान्वितं संज्ञास्कन्धजनकोऽमिताभः।
( वि० प्र०, 256 a )

**अमोघसिद्धिः**

सारङ्गः शीघ्रगामो क्षरलघुविषयस्त्रस्तचित्तोऽतिभीतोऽमोघसिद्धिरिति।
( वि० प्र०, 231 b-232 a )

अमोघसिद्धिर्मृगः। ( वि० प्र०, 231 b )

तेषामेकत्वं प्राणवायुर्हींकारान्वितः कृत्यानुष्ठानज्ञानं संस्कारस्कन्धजनकोऽमोघसिद्धिः। ( वि० प्र० 256 a )

**अष्टविधासनम्**

.........वामजानूपरि दक्षिणपादो गत उत्तानक इति पर्यङ्कः.........सव्यपादं( दो ) वामोरुमूर्ध्नि तिर्यगुत्तानेनेति वज्रासनम्।.........अङ्ककार-कूर्मपात( द )-वदिति दैत्यासनम् .........भूम्यां द्वौ पादौ समौ गुल्फौ फिच्चकमूललग्नौ, ऊर्ध्वगतं जानुद्वयम् उरुद्वयं चेत्युत्कटम्। .........पर्यङ्कवद् वाम उत्कटवत्, किञ्चिद्वामे नम्र इति पर्यङ्कार्धद्विभेदम्।.........वामचरणं गुदगतं चरणोपरि गुदो निषण्णः, दक्षिण-मुत्कटवदिति। .........दक्षिणं गुदगतं चरणोपरि गुदो निषण्णो वाममुत्कटवत्—इत्यष्टविधासनभेदनियमः। ( वि० प्र० 170 a–170 b )

**आनन्दचतुष्टयम्**

इह सर्वस्य जगतः कामा मनसि क्षोभं करोति प्रथमानन्दमिति। ततः पूर्णतां याति पूर्णावस्था ललाटे बोधिचित्तपूर्णत्वात् प्रज्ञालिङ्गनादिना द्वितीयः परमानन्द इति। ततः पूर्णादुत्तमाङ्गाद् मैथुने ज्वालावस्था बिन्दुं स्रवति शशधरं द्रावयित्वा

तृतीयं विरमानन्दं करोतीति। तत ओड्डावस्था बिन्दुच्यवनकाले कायवाक्चित्त-बिन्दूनामवसाने चतुर्बिन्दुनिर्गमकाले सहजानन्दं करोतीति। एवं प्रतिपदादि-पञ्चपञ्चकला आकाशवायुतेजउदकपृथिवीस्वरूपाभिर्नन्दाभद्राजयारिक्तापूर्णा-नामभिः। अ इ ऋ उ ऌ क। अ ए अर् ओ अल् र। ह य र व ल ङित्येतत् स्वरधर्मिणीभिः। एवं पञ्चमी आनन्दपूर्णा। दशमी परमानन्दपूर्णा। पूर्णिमा विरमानन्दपूर्णा। सहजानन्द इति। षोडशी कला सर्वधातूनां समाहारो मेलापकः समाजः संवर इति। ( वि० प्र० 226 a )

**आवरणानि ( पञ्च )**

एवं कौकृत्यस्त्यानमिद्धौद्धत्यविचिकित्सेति पञ्चावरणानि परित्यजेत्।
( वि० प्र० 253 a )

**आस्रवचतुष्टयम्**

एवं कामास्रवं भवास्रवमविद्यास्रवं दृष्ट्यास्रवम् ( वि० प्र०, 253 a )

**इष्टसिद्धिः**

इह बोधिचित्तस्य वामदक्षिणनाडीप्रवाहवशेन वामदक्षिणेन गतस्य सर्वकालं मध्यमाप्रवाहेन षट्सु गुह्यादिकमलेषु अधोगमनादूर्ध्वगमनं नाम चर्या। सा इष्टसिद्धिर्महामुद्रासिद्धिः। ( वि० प्र०, 290 a )

**उपसाधनम्**

शून्यताबिम्बेऽन्यैश्चक्षुरादिभिर्मांसाद्यैरन्यरूपादिविषयग्रहणमुपसाधनम्।············ कुलिशकमलजेनामृतेनाच्युतेनोपसाधनं नीतार्थेन बाह्ये देवतोत्सर्जनेन नेयार्थे-नेत्युपसाधनसिद्धिः। ( वि० प्र०, 258 b )

**कर्मराजाग्री**

वाङ्निष्पत्तिः कर्मराजाग्री। कर्मेन्द्रियक्रियाप्रवर्तनात्। ( वि० प्र०, 283 b )

**कलुषम्**

रागद्वेषमोहमानेर्ष्यामात्सर्यसमूहः कलुषम्। ( वि० प्र०, 162 b )

**कायचतुष्टयम्**

सर्वाकारवरोपेतः कायो नानाधिमुक्तितः।
दृश्यते स्वस्वभावेन सत्त्वैर्निर्माणलक्षणः॥

सर्वसत्त्वरुतैर्ऋद्धिमात्मनो य: प्रकाशते।
सत्त्वाशयवशेनैष काय: संभोगलक्षण: ॥
नानित्यो नापि नित्यो यो नैको नानेकलक्षण:।
न भावो नाप्यभावोऽसौ धर्मकायो निराश्रय: ॥
शून्यताकरुणाभिन्नो रागारागविवर्जित:।
न प्रज्ञा नाप्युपायोऽसौ काय: स्वाभाविकोऽपर: ॥
कालचक्रमिति ख्यातं चतुष्कायात्मकं शिवम्। ( वि० प्र०, 251 a )

**कायवज्रजाप:**

वामे गतिगत: प्राण: कायवज्रजाप इत्युच्यते ( वि० प्र०, 284 b )

**कालचक्रम्**

आदिबुद्धे भगवानाह—
दिनं सूर्यो रजो वज्री भावभेदैर्निशा शशी।
शुक्रं पद्मं तयोरैक्यं कालचक्रं महासुखम् ॥ इति।

तथा परतन्त्रान्तरेऽपि भगवता सामान्येनोक्तम्—
दिनस्तु भगवान् वज्री नक्तं प्रज्ञा प्रकीर्तिता।
आदित्यो हि यथा रुद्रस्तथा चन्द्र उमा मता ॥

एवं सूर्यचन्द्रदिवानिशाभेदेनाहोरात्रं काल इत्युच्यते। तस्य चक्रं षट्शताधिकैकविंशत्सहस्रश्वासात्मकं द्वादशाङ्गप्रतीत्यलक्षणं राशिचक्रं लौकिकसंवृत्योत्पादक्षयहेतुभूतं सर्वसत्त्वानाम्। तथा चाह—
काल: सृजति भूतानि काल: संहरते सदा।
कालो हि भगवान् वज्री अहोरात्रस्वरूपवान् ॥ ( वि० प्र०, 521 b )

**कुलम्**

शतकुलभेदेन शतसमया:। "त्रिकुलं पञ्चकुलं चैव। स्वभावैकं शतं कुलम्" इति वचनात् षट्त्रिंशत् कुलानि। चतु:षष्टिकुलानि। योगिनीनामेकत्वं शतकुलानि वेदितव्यानीति नियम:। ( वि० प्र०, 237 a )

**क्रमद्वयम्**

क्रमद्वयं समाश्रित्य देशना वज्रिणो मम।
उत्पत्तिक्रमेणैका उत्पन्नक्रमतोऽपरेति ॥ ( वि० प्र०, 288 a )

**चित्तजापः**

मध्यमो गतिगतः प्राणश्चित्तजाप इत्युच्यते। ( वि० प्र०, 284 b )

**जातिः ( अष्टधा )**

पृथिवीजातिस्तर्वादयः स्थावराः। उदकजातिः स्वेदजाः। तेजोजातिर्जरायुजाः। वायुजातिरण्डजाः। चन्द्रजातिर्नागासुराः। सूर्यजातिर्भूतदेवताः। राहुजातिररूपाः। कालाग्निजातिर्नारकाः—एवमष्टधा जातिः। ( वि० प्र०, 267 a )

**जिनकुलानि**

रूपवेदनासंज्ञासंस्कारा एतानि चत्वारि जिनकुलानि।………एवं लोचनापाण्डरा-मामकीतारा जिनकुलानि। ( वि० प्र०, 293 b–294 a )

**तारा**

एवं तन्वी किञ्चित् प्रलम्बाञ्चपलनयना पद्मिनो वक्रकेशेति तारा।

( वि० प्र०, 231 b )

अश्वा तारा। ( वि० प्र०, 233 b )

**त्रिभवपरिज्ञानम्**

इहातीतानागतवर्तमाने त्र्यध्वनि त्रिभवस्य यथाभूतदर्शनं परिज्ञानम्। तदेव त्रिभवा-वरणक्षयेण हेतुफलनिरोधेन संबुद्धानां यौगपद्येन भवति सर्वज्ञता, सर्वाकारज्ञता-मार्गज्ञता-मार्गाकारज्ञताबलेन। न श्रावकप्रत्येकबुद्धानां बोधिसत्त्वानां च यौगपद्येन त्र्यध्वनि यथाभूतं त्रिभवस्य परिज्ञानं भवति, सोपाधिनिर्वाणधातुत इति। ( वि० प्र०, 282 a )

**त्रिमुद्रा**

तिस्रो मुद्रास्त्रिमात्रा इति। त्रिविधगतिवशादिति। इह बोधिचित्तस्य क्षरगति-र्मृदुमात्रा। स्पन्दगतिर्मध्यमात्रा। निःस्पन्दगतिरधिमात्रेति। एवं कर्ममुद्रा क्षरसुख-दायिनी, ज्ञानमुद्रा स्पन्दसुखदायिनी, महामुद्रा निःस्पन्दसुखदायिनी। एवं त्रिमुद्रा-भावना षडङ्गयोगे। ( वि० प्र०, 287 a )

**दशभूमीश्वरत्वम्**

यथा बोधिसत्त्वानां लवमात्रावरणात्, एवं क्रोधेन्द्राणामपि सिद्धं दशभूमीश्वरत्वम्।

( वि० प्र०, 282 b )

**दिव्याः**

तत्र दिव्या धूमा मरीचिः खद्योता प्रदीपा पीतदीप्ता श्वेतदीप्ता रक्तदीप्ता कृष्णदीप्ता। (वि० प्र०, 277 b)
दिव्या धूमादयः। (वि० प्र०, 278 a)

**धारणा**

धारणा प्राणस्य ललाटे एकचित्तं नाम। (वि० प्र०, 286 b)

**ध्यानम्**

तर्क इति भावग्रहणम्। विचार इति तस्य निश्चयार्थः। रतिरिति बिम्बासक्तिः। अचलसुखमिति बिम्बेन सह चित्तस्यैकीकरणम्। एवं ग्राह्यग्राहकभेदेन ध्यानं दशविधम्। (वि० प्र०, 286 b)

**नारीचर्या**

बाह्ये पुनः पञ्चतथागतकुलनारीणां ग्रहणं नारीचर्या। (वि० प्र० 210 a)

**निरपेक्षता**

कायभोगनिरपेक्षता, वाग्भोगनिरपेक्षता, चित्तभोगनिरपेक्षता, च्यवनसुख-निरपेक्षता। (वि० प्र०, 285 a)

**निर्वाणम्**

भवस्य परिज्ञानं निर्वाणमिति कथ्यते। (वि० प्र०, 282 a)

**पञ्चप्रदीपाः**

पञ्चेन्द्रियाणि पञ्चप्रदीपाः। (वि० प्र० 285a)

**पञ्चामृतम्**

बाह्ये पञ्चामृतं विडादिकम्। ............अध्यात्मनि पञ्चामृतानि पञ्चस्कन्धाः।
(वि० प्र० 285 a)

**परदार-सेवा**

सौख्यं यत् शुक्रबिन्दोरप्रपाताद् भवति सा परदारस्य सेवा। परदारा प्रज्ञापारमिता संसारपारं गता। परो वज्रसत्त्वः संसारपारं गतः। तस्य दारा परदारेति तस्याः सेवा विरागतोऽक्षरसुखतो योगिनाम्। बाह्ये पुनः सेकादिकाले दात्रा स्वभार्यादिका

दत्ता, तस्याः सेवा परदारस्य सेवा विरागादिति। यथात्मसमयिनां विरागो न भवति समयभेद इत्यर्थः। ( वि० प्र० 289 b )

**पाण्डरा**

निर्लज्जा तीव्रकामा बहुकलहरता शङ्खिनी स्वल्पकेशेति पाण्डरा।
( वि० प्र० 231 b )

अश्वः पाण्डरा। ( वि० प्र०, 233 b )

**पूजा ( दशविधा )**

विण्मूत्रमज्जाः पञ्चप्रदीपा अष्टसमयाः, द्वौ चन्द्रादित्यौ, एवं दशविधा पूजा पञ्चामृतैः पञ्चप्रदीपैर्भवति। ( वि० प्र०, 233 a )

**पूजा ( सप्तविधा )**

वन्दना, पूजना, पापदेशना, पुण्यानुमोदना, तथागतानामध्येषणा, याचना, पुण्यपरिणामनेति। ( वि० प्र०, 253 a )

**पूजाद्रव्यम् ( दशविधम् )**

चक्रमेलापके अर्घादिकमुच्यते। ........तोयपात्रम् अर्घपात्रं गन्धपात्रं धूपपात्रं पुष्पपात्रं फलपात्रम् अक्षतपात्रं प्रदीपपात्रं नैवेद्यपात्रं वस्त्रपात्रम्—एवं दशविधं पूजाद्रव्यम्। गणचक्रमेलापके पूजार्थं मण्डलचक्रेऽपि। तथाध्यात्मद्रव्यं दशविधं भवति—शुक्रं मूत्रं च मज्जा विट् पिशितं कालजं पित्तं रक्तम् अन्त्रं चर्माणि च भवति दशविधं चक्रमेलापके योगिनीनां पूजाकरणार्थम्। ( वि० प्र०, 235 a )

**प्रतीच्छा**

सप्तत्रिंशत् प्रतीच्छाः, इच्छानां निवर्तनं प्रतीच्छा इत्युच्यते। ( वि० प्र०, 266 b )

**प्रत्याहारः**

प्रत्याहारो नाम शरीरे विषयविषयिणां दशानां सम्बन्धेनाप्रवृत्तिर्विज्ञानस्य शून्यबिम्बे विषयेषु प्रवृत्तिरन्यैश्चक्षुरादिभिः पञ्चविधैरिति। तथा तस्मिन्नेव बिम्बे प्रज्ञेत्यालोकनम्। ( वि० प्र०, 286 b )

**प्राणायामः**

प्राणायामो नाम द्विमार्ग इति। वामदक्षिणमार्गस्खलनम्। निरोधो मध्यमार्गे प्रवेशः। स च दशविधो दशमण्डलरोधतः। इह बिन्दाविति ललाटे प्राणप्रवेशः। उभयगतिहत इति गमनागमनरहितः। ( वि० प्र०, 286 b )

**प्राणायामानलम्**

इह प्राणनिरोधेन या चण्डाली ज्वलिता सा प्राणायामानलमित्युच्यते।
( वि० प्र०, 289 b )

**बलानि**

श्रद्धाबलं वीर्यबलं स्मृतिबलं समाधिबलं प्रज्ञाबलम्। अश्रद्धा-अवीर्या-अस्मृति-असमाधि-अप्रज्ञानामावरणक्षयेण श्रद्धादीनि बलानि। ( वि० प्र०, 281 b )

**बिन्दुयोगः**

प्रणिपत्याच्युतं सौख्यं षोडशार्द्धार्द्धबिन्दुधृक्।
यस्तस्योपायः सम्यग् बिन्दुयोगः प्रकथ्यते॥
........बोधिचित्तबिन्दुनिष्पत्तिर्बिन्दुयोगः........
श्रवते बिन्दुरूपेण अमृतं शुक्ररूपिणम्।
बिन्दुयोग इति ख्यातः षोडशार्द्धार्द्धबिन्दुधृक्॥ ( वि० प्र०, 283 b )

**बुद्धाः**

बुद्धा अमोघसिद्धि-रत्नसंभव-अमिताभ-वैरोचनाः। ( वि० प्र०, 277 b )
बुद्धैर्वैरोचनादिभिश्चतुर्भिः ( वि० प्र०, 280 a )

**बोधिचित्तम्**

जन्मबोधिबीजाच्छिरसि श्रवति योऽहङ्कारो बिन्दुरूपं शुक्रमागन्तुकं स वज्री बोधिचित्तमित्यर्थः। ( वि० प्र०, 284 a )

**बोधिपाक्षिकधर्माः**

सप्तत्रिंशद्बोधिपाक्षिकधर्मैर्योगिनीनां विशुद्धिरुच्यते..........इह चतस्रो देव्यो यथाक्रमेण। कायानुस्मृत्युपस्थानं लोचना, वेदनानुस्मृत्युपस्थानं पाण्डरा इति पश्चिमदक्षिणम्। चित्तानुस्मृत्युपस्थानं मामकी, धर्मानुस्मृत्युपस्थानं तारेति वामपूर्वं कायभेदेन पीठोपपीठद्वयमिति कायचक्रे प्रसिद्धम्। नान्यस्मिन् तन्त्रे प्रसिद्धं गोपितं भगवतेत्यर्थः। तथा सप्तबोध्यङ्गानां मध्ये एकं बोध्यङ्गं माता वज्रधात्वीश्वरी कुलपीठमुपेक्षासम्बोध्यङ्गमिति। अपरमपि तथा शब्दवज्रादिषट्कमिति स्मृतिसंबोध्यङ्गं शब्दवज्रा। धर्मप्रविचयसंबोध्यङ्गं स्पर्शवज्रा। वीर्यसंबोध्यङ्गं रूपवज्रा। उपक्षेत्रं कायभेदात्। तथा प्रीतिसंबोध्यङ्गं गन्धवज्रा। प्रश्रब्धिसंबोध्यङ्गं रसवज्रा। समाधिसंबोध्यङ्गं धर्मधातुवज्रेति। क्षेत्रं

द्विधा। तथाब्धिसम्यक्प्रहाणानीति। अनुत्पन्नानां पापानामनुत्पादाय प्रहाणं चर्चिका। उत्पन्नानां पापानां प्रहाणं कुशलमूलं वैष्णवी। अनुत्पन्नानां कुशलानां प्रहाणं कुशलोत्पादनं माहेश्वरी। उत्पन्नानां कुशलानां बुद्धत्वपरिणामना-प्रहाणं महालक्ष्मीः। उपछन्दोहाश्चत्वारः। अपरजलधयश्चतस्रो देव्य ऋद्धिपादा भवन्ति। तत्र छन्दऋद्धिपादो ब्रह्माणी। वीर्यऋद्धिपाद ऐन्द्री। चित्तऋद्धिपादो वाराही। मोमांसाऋद्धिपादः कौमारीति छन्दोहभेदात्यष्टकं स्यात्। तथा पञ्च-क्रोधबलानीति। इह श्रद्धाबलमतिनीला। वीर्यबलमतिबला। स्मृतिबलं वज्र-श्रृङ्खला। समाधिबलं मानी। प्रज्ञाबलं चुन्देत्युपमेलापकम्। तथा प्रकटितनिय-तानीन्द्रियाण्येव पञ्चेति। तथा श्रद्धेन्द्रियं स्तम्भी। वीर्येन्द्रियं मारेची। स्मृती-न्द्रियं यम्भी। समाधीन्द्रियं भृकुटी। प्रज्ञेन्द्रियं रौद्राक्षीति। मेलापकमेव दशकम्। सम्यक् चाष्टाङ्गमार्गो भवति नरपते चाष्टकं दैत्यजानामिति। इह सम्यक्दृष्टिः श्वानास्या। सम्यक्संकल्पः काकास्या। सम्यग्वाग् व्याघ्रास्या। सम्यक्कर्मान्त उलूकास्या। सम्यगाजीवो जम्बुकास्या। सम्यग्व्यायामो गरुडास्या। सम्यक्-स्मृतिः शूकरास्या। सम्यक्समाधिः गृध्रास्येति। एवं सप्तत्रिंशत् प्रभेदैस्त्रिभुवन-निलये बोधिपाक्षिका धर्मा ये।.........एवं सप्तत्रिंशद्बोधिपाक्षिकधर्मैर्विशोधितं पीठादिकं धर्मकायलक्षणं भवति। ( वि० प्र०, 238 b–239 b )

**बोधिसत्त्वकुलानि**

विष्कम्भिक्षितिगर्भलोकेश्वरखगर्भा एतानि बोधिसत्त्वकुलानि। .........गन्धवज्रा रूपवज्रा स्पर्शवज्रा बोधिसत्त्वकुलानि। ( वि० प्र०, 294 a )

**भयानि ( षोडश )**

शत्रुभयं सिंहभयं गजभयं वह्निभयम् उरगभयं तस्करभयं पाशबन्धभयं क्षुब्ध-समुद्रभयं पिशाचभयं व्याधिभयम् इन्द्रोपद्रवभयं दारिद्र्यदुःखभयं स्त्रीवियोग-दुःखभयं क्षुभितनृपतिभयं वज्रपातभयम् अर्थनाशभयम्। एवं षोडशभयानि। ( वि० प्र०, 250 a )

**मण्डलराजाग्री**

इह सर्वोत्पत्तिक्रमे कायनिष्पत्तिर्मण्डलराजाग्री। ( वि० प्र०, 283 b )

**महासाधनम्**

महासाधनं प्रज्ञासङ्गेऽच्युतं सुखं सम्भवति। यदा तदा खलु महासाधनं सूक्ष्म-योगादिति। षुसुम्नानाडिकोर्ध्वं शुक्रसंयोगान्महासाधनमित्युच्यते नीतार्थेन।

नेयार्थेन पुनः प्रज्ञाधर्मोदयनासिकाग्रे सर्षपादिकमिति नियमः। एवं महासाधनं भवति। ( वि० प्र०, 285 b )

**मानी**

मानोऽस्यास्तीति मानी। मानोऽप्यनेकधा—पण्डिताभिमानः, द्रव्यैश्वर्याभिमानः, दशतत्त्वपरिज्ञानमार्गरूपाद्यभिमानः, स यस्यास्ति स वर्जनीयोऽधोऽधः। सत्त्वान् पश्यन्निति मानी, उत्तमोत्तमसत्त्वान् पश्यन् मानरहितो भवति, सम्यङ्मार्गवेत्तेति, तेन मानी करुणारहितो वर्जनीयः। ( वि० प्र०, 162 b )

**मामकी**

दीर्घा सर्वाङ्गपूर्णा खलु लघुविषया चित्रिणी दीर्घकेशेति मामकी।
( वि० प्र०, 231 b )

गोर्मामकी। ( वि० प्र०, 233 b )

**मारः ( चतुर्विधः )**

माराणां स्कन्धक्लेशमृत्युदेवपुत्रमाराणां चतुर्णाम्………… । ( वि० प्र०, 162 b )

स्कन्धक्लेशमृत्युदेवपुत्रमारम्। ( वि० प्र०, 252 a )

मारः कामदेवः पञ्चपुष्पबाणधनुर्हस्तः। पाशाङ्कुशधरश्चतुर्भुज एकवक्त्रो रक्तवर्णः। सव्ये पादतले रक्तवर्णः। ( वि० प्र०, 256 b )

मार…………स्वदेव्यौ। रतिर्मारस्य। ( वि० प्र०, 257 a )

**मुद्राचतुष्टयम्**

वज्रपूजायां चतुर्मुद्रासंज्ञोच्यते। ………इह समयमेलापके चतुर्धा संज्ञा। आदौ या प्रज्ञा स्त्री सा गुह्यमुद्रोच्यते। श्रीनरो योगी उपायी दिव्यमुद्रा भवति समये। तयोर्मेलापके क्रीडायां चुम्बनादिकं कर्ममुद्रोच्यते। द्वीन्द्रियसंयोगे समसुखैर्धर्ममुद्रोच्यते। इति चतुर्धा समयभाषा वज्रपूजायामुक्ता। ( वि० प्र०, 231 a )

**मुद्रात्रयम्**

इह सर्वतन्त्रेषु बाह्ये नेयार्थेन ललाटे कायमुद्रा, कण्ठे वाङ्मुद्रा, हृदये चित्तमुद्रेति। नीतार्थेन पुनरब्जे वज्रप्रवेशो वज्रस्य सदोत्थानं कायमुद्रा। शिखिनि च मरुतो मध्यनाड्यां प्राणवायोः प्रवेशो वाङ्मुद्रा। बिन्दुपातश्चित्तमुद्रा।
( वि० प्र०, 227 b )

**मूलानि ( त्रीणि )**

तत्र त्रीणि मूलानि स्मरेत्—बोधिचित्तोत्पादः, आशयविशुद्धिः, अहङ्कारममकार-परित्याग इति। ( वि० प्र०, 253 a )

**मूलापत्तयः**

मूलापत्तिः सुतानां भवति शशधरा श्रीगुरोश्चित्तखेदात्
तस्याज्ञालङ्घनेऽन्या भवति खलु तथा मातृकोपात् तृतीया।
मैत्रीत्यागाच्चतुर्थी भवति पुनरिषुर्बोधिचित्तप्रणाशात्
षष्ठी सिद्धान्तनिन्दा गिरिरपि चलनेऽयाचिते गुह्यदानात्॥ (का० त०, 3.102)

स्कन्धक्लेशादहिः स्यात् पुनरपि नवमी शुद्धधर्मेऽरुचिर्या,
माया मैत्रो च नामादिरहितसुखदे कल्पना दिक् च रुद्रा।
शुद्धे सत्त्वे प्रदोषाद् रविरपि समये लब्धके त्यागतोऽन्या,
सर्वस्त्रीणां जुगुप्सा खलु भवति मनुर्वज्रयाने स्थितानाम्॥
( का० त०, 3.103 )

मूलापत्तय उच्यन्ते............इह सर्वतन्त्रेषु मूलापत्तयश्चतुर्दश, तेषु प्रत्येकं भवति यथा तथाह—मूलापत्तिः सुतानाम् अभिषिक्तानां शिष्याणां भवति शशधरेति प्रथमा श्रीगुरोश्चित्तखेदादिति। अत्र गुरुर्द्विधा—सद्गुरुः, असद्गुरुश्चेति। तयोश्चित्तखेदाद् द्विधा परार्थतः स्वार्थतश्चेति। यस्य परार्थतश्चित्तखेदः स सद्गुरुः। यस्य स्वार्थतश्चित्तखेदः सोऽसद्गुरुरिति। अत्र श्रीगुरोश्चित्तखेदो दशाकुशल-प्रवृत्त्या शिष्यस्य भवति। तस्माच्चित्तखेदान्मूलापत्तिर्भवति। न स्वार्थप्रवृत्तस्य गुरोर्दशाकुशलप्रवृत्तेरिति नियमः। तस्याज्ञालङ्घनेऽन्या द्वितीया मूलापत्तिर्भवति गुरोः। परोक्षेऽपि दशाकुशलं कुर्वत इति। एवं भ्रातृकोपात् तृतीया भवति। यदा ज्येष्ठे वा कनिष्ठे वा वज्रभ्रातरि शिक्ष्यमाणे प्रकोपं करोति। मैत्रीत्यागाच्चतुर्थीति। इह मैत्रीत्यागश्चतुःप्रकारः। मृदुमध्याधिमात्राधिमात्राधिमात्रभेदेन। तत्र मृदुर्जले दण्डरेखावत् मैत्रीत्यागः क्षणमात्रं ततो निवर्तयति। मध्यमो वालु-रेखावत् तेन पुनः समत्वं याति। अधिमात्रात्मको भूमिस्फुटितवद् वर्षोदकेन पुनः समत्वं याति। ततोऽमैत्रीचित्तमधिमात्राधिमात्रात्मकं परिपक्वं यथा पाषाणभिन्नः पुनर्न क्वचित्संपूर्णः समरसो भवति। यथा वा पक्वफलं न वृक्षे तिष्ठति। तन्मैत्रीत्यागः सत्त्वानाम्। तेन चतुर्थी मूलापत्तिर्भवतीति नियमः। इषुरिति पञ्चमी भवति। बोधिचित्तप्रणाशादिति। इह बोधिचित्तं शुक्रं तस्य विनाशाद् अच्युतसुखं न भवति। यतोऽतत्त्विनां द्वीन्द्रियसुखेन बुद्धत्वकाङ्क्षिणां पञ्चमी मूलापत्तिर्भवति।

षष्ठी सिद्धान्तनिन्दा। सिद्धान्तं प्रज्ञापारमितानयं मन्त्रनये तत्त्वपटलं तस्य निन्दया षष्ठीति। गिरिरिति सप्तमी भवति। अयाचिते नरे श्रावकमार्गस्थिते गुह्यदानाद् महासुखदानाद् आचार्याणामापत्तिः। ( वि० प्र०, 220 a-220 b )

स्कन्धक्लेशादहोत्यष्टमी। स्कन्धक्लेशादिरुपवासः। संन्यस्तादि शरीरछेदनादिकमुच्यते। तस्मादष्टमी भवति। पुनरपि नवमी शुद्धधर्मे शून्यताधर्मेऽरुचिर्या भवति। मायामैत्री च मुखतोऽन्यद् वाक्यमिष्टम्, हृदयेऽन्या चिन्तेति। मायामैत्री या सा दिगिति दशमी। नामादिरहिते सुखदे तथागततत्त्वे कल्पना या सा रुद्रेति एकादशी। शुद्धे सत्त्वे योगिनीप्रदोषाद् रविरिति द्वादशी भवति। समये लब्धे सति त्यागतो गणचक्रेऽन्या त्रयोदशी भवति। सर्वस्त्रीणां जुगुप्सा या सा मनुरिति चतुर्दशी खलु निश्चिता भवतीति नियमः। केषाम् ? वज्रयाने स्थितानामभिषिक्तानामिति नियमो वज्रधरस्य स्थूलापत्तयोऽनेकास्तासां स्वल्पदण्डो भवतीति नियमः।

**मोक्षः**

मोक्षोऽत्र बोधिचित्तबिन्दूनां च्युतिक्षणः। ( वि० प्र०, 278 b )

**योगचर्या ( द्विधा )**

इह योगिनां योगचर्या द्विधा–एका बाह्या द्वितीयाऽध्यात्मिका। तत्र या बाह्या सा लौकिकफलहेतुः। या चाध्यात्मिका सा लोकोत्तरफलहेतोः। ( वि० प्र०, 289 a )

**रत्नसंभवः**

अश्वो वै कामलोलो भवति परवशो मूत्रगन्धः परार्थीति रत्नसंभवः।
( वि० प्र०, 232 a )

रत्नसंभवोऽश्वः। ( वि० प्र०, 231 b )

सूर्यो रजो व्यञ्जनान्वितं समताज्ञानं वेदनास्कन्धजनको रत्नसंभवः।
( वि० प्र०, 256 a )

**लोचना**

एवं स्थूला खर्वा दृढाङ्गी सुकठिनविषया हस्तिनी स्थूलकेशेति लोचना।
( वि० प्र०, 231 b )

हस्ती लोचना। ( वि० प्र०, 233 b )

**वज्रधात्वीश्वरी**

इह सुभद्रा तन्वङ्गी सूक्ष्मकेशा मृदुकरचरणा सत्त्ववत्सलेति वज्रधात्वीश्वरी ।
( वि० प्र०, 231 b )

वज्रधात्वीश्वरी सर्वरूपधारिणीति । ( वि० प्र०, 233 b )

**वज्रयानम्**

वज्रयानं सम्यक्संबुद्धयानम्, तीर्थिकश्रावकप्रत्येकबुद्धयानानामभेद्यत्वात्, वज्रं मोक्षो यायतेऽनेनेति वज्रयानम् । ( वि० प्र०, 162 b )

**वज्राचार्यः**

कायवाक्चित्ताभेद्यत्वाद् वज्राचार्यः शाक्यमुनिस्तथागत इति । इह त्रैधातुके सत्त्वार्थं प्रति यस्य कायवाक्चित्तमभेद्यं वज्रवदाचरति स वज्राचार्यः सर्वगः सर्वज्ञ एव । ( वि० प्र०, 163 b )

इहाचार्यपरीक्षायां त्रिधा वज्राचार्यः—उत्तमो मध्यमोऽधम इति । तद्यथा—

दशतत्त्वपरिज्ञानात् त्रयाणां भिक्षुरुत्तमः ।
मध्यमः श्रावणेराख्यो गृहस्थस्त्वधमस्तयोः ॥

( वि० प्र०, 249 b )

**वाग्जापः**

दक्षिणे गतिगतः प्राणी वाग्जाप इत्युच्यते । ( वि० प्र०, 284 b )

**विद्या**

विद्या तारा पाण्डरा मामकी लोचना इति । ( वि० प्र०, 277 b )
विद्याभिर्लोचनादिभिश्चतसृभिः………… ( वि० प्र०, 280 a )

**विमोक्षचतुष्टयम्**

चतुर्विमोक्षं विभावयेत् । शून्यतामनिमित्तमप्रहिणितमनभिसंस्कारमिति ।
( वि० प्र०, 253 a )

**वैरोचनः**

कामी वै मन्दगामी भवति खलु गजः पूतिगन्धोऽतिमूर्ख इति वैरोचनः ।
( वि० प्र०, 232 a )

वैरोचनो गजः । ( वि० प्र०, 231 b )

चन्द्रः शुक्रं स्वरान्वितम् आदर्शज्ञानं रूपस्कन्धजनकं वैरोचनः ।

( वि० प्र०, 255 b–256 a )

**व्रतानि ( पञ्च )**

हिंसाऽसत्यं परस्त्रीं त्यज स्वपरधनं मद्यपानं तथैव
संसारे वज्रपाशः स्वकुशलनिधनं पापमेतानि पञ्च । ( का० त०, 3 93 )

आह भगवान्—हिंसाऽसत्यं परस्त्रीं त्यज स्वपरधनं मद्यपानं तथैवेति । पञ्चव्रतानि नियमा इत्यर्थः । ( वि० प्र०, 214 b )

**व्रतानि ( पञ्चविंशति )**

द्यूतं सावद्यभोज्यं कुवचनपठनं भूतदैत्येन्द्रधर्मं
गोबालस्त्रीनराणां त्रिदशनरगुरोः पञ्चहत्यां न कुर्यात् ।
द्रोहं मित्रप्रभूणां त्रिदशनरगुरोः संघविश्वासिनां च
आसक्तिस्त्विन्द्रियाणामिति भुवनपतेः पञ्चविंशद् व्रतानि ॥

( का० त०, 3.94 )

…………तत्र द्यूतं सावद्यभोज्यं पूर्वोक्तं कुवचनपठनं भूतधर्मं पितृकार्यं यागकार्यं वेदोक्तम्, दैत्यधर्मं म्लेच्छधर्मं न कुर्यादित्युपपातकानि पञ्च । तथा पूर्वापराणां दशनामादिना पञ्चहत्यां न कुर्यात् सर्वदा, गोहत्या बालहत्या स्त्रीहत्या पुरुषहत्या त्रिदशनरगुरोरिति प्रतिमास्तूपादेर्विसंवादोऽपरा हत्येति, तथा मित्रद्रोहम्, प्रभुद्रोहम्, बुद्धद्रोहम्, संघद्रोहम्, विश्वस्तद्रोहमिति पञ्च न कुर्यादिति तथा आसक्तिस्त्विन्द्रियाणामिति रूपासक्तिः, शब्दासक्तिः, गन्धासक्तिः, रसासक्तिः, स्पर्शासक्तिरिति । भुवनपतेर्वज्रसत्त्वस्य नियमेन पञ्चविंशद् व्रतानि पालनीयानि शिष्यैरिति वज्राचार्येण देयानि । सेककाले शिष्यायेति व्रतदाननियमः ।

( वि० प्र०, 214 b–215 a )

**शान्तम्**

इह सौख्येनाऽनष्टेन बोधिचित्तं य एकक्षणः स शान्त इत्युच्यते ।

( वि० प्र०, 288 a )

**शिष्य (द्विविधः)**

इह मन्त्रनये शिष्यो द्विधा—एको महामुद्रासिद्धिसाधनार्थी, द्वितीयो लौकिकसिद्धिसाधनार्थी । यो महामुद्रासिद्धिसाधनार्थी स शून्यतामार्गभावनार्थं सेकेन

संग्राह्यः स कल[श]गुह्यादिकेन। योऽसौ लौकिकसिद्धिसाधनार्थी स मन्त्रमुद्रा-मण्डलचक्रभावनार्थं सप्ताभिषेकेण संग्राह्यो मध्यमः पुण्यहेतोरिति।

( वि० प्र०, 164 a–164 b )

**शून्यम्**

प्राणिनां मरणान्ते स्कन्धपरित्यागादुपपत्त्यंशिकस्कन्धग्रहणाद् यदन्तरालं शून्यता-क्षणमेकं त्रिभवदर्शनं शून्यमित्युच्यते। ( वि० प्र०, 285 b )

**षट्पारमिता**

दानं त्यागो धनस्याच्युतिरपि मनसः स्त्रीप्रसङ्गाच्च शीलः
क्षान्तिः शब्दाद्यवेशो ह्युभयगतिविनाशोऽनिलस्यैव वीर्यम्।
ध्यानं प्रज्ञा च चित्तं सहजसुखगतं सर्वगा सर्वभाषा
तस्याः सत्त्वार्थमृद्धिर्भवनिधनमजप्राप्तिरन्याश्चतस्रः॥ ( का० त०, 4.128 )

( वि० प्र०, 290 b )

**षडङ्गयोगः**

प्रत्याहार आदिकर्मणि जिनेन्द्र इति ज्ञानस्कन्धः। स च निमित्तभेदेन दशविधो धूम-मरीचिखद्योतदीपज्वालाचन्द्रादित्यराहुकलाबिन्दुदर्शनभेदेनाकल्पितो ज्ञानस्कन्धः। ध्यानमक्षोभ्यः। एवं दशविधो विज्ञानस्कन्धो विषयविषयिणां दशानामेकत्वं विश्व-बिम्बे ध्यानमिति। प्राणायामश्च दशविधः खड्गीति संस्कारस्कन्धो वामदक्षिण-मण्डलैकलोलीभूतत्वादिति।

पुनरपि दशधा धारणा रत्नपाणिरिति वेदनास्कन्धः। प्राणस्य धारणा नाभि-हृत्कण्ठे ललाटोष्णीषकमले गतागतभेदेन दशविध इति।

डोम्ब्यां चानुस्मृतिः स्यादपि कमलधर इति संज्ञास्कन्धो दशविधः। स चानु-स्मृतिर्डोम्ब्यां मध्यनाड्यां दशकामावस्थाभेदत इति।

श्रीसमाधिश्चक्रीति वैरोचनो दशविधः। समाधिर्दशवायूनां निरोधत इति।

( वि० प्र०, 286 a–286 b )

**सत्यद्वयम्**

सत्यद्वयं समाश्रित्य बुद्धानां धर्मदेशना।
लोकसंवृतिसत्येन सत्येन परमार्थतः॥

इति भगवतो नियमः। ( वि० प्र०, 288 a )

**समयचतुष्टयम्**

मद्यमांसमैथुनामृतभक्षणमिति समयचतुष्टयम् । ( वि० प्र०, 233 a )

**समयविशुद्धिः**

इदानीं पीठादिभिः समयविशुद्धिरुच्यते—विण्मूत्रं रक्तमांसमिति सकलसत्त्वानां विविधानां तनुगतं पीठभेदे चतुष्कम् । कर्णनासाक्षिजिह्वागुदं भगमिति षट्कम् क्षेत्रभेदे भवति । तथा पूयः श्लेष्मा यूका कृमिर्लसिवसालोमकेशा इत्यष्टौ छन्दोहभेदाः । तथाऽन्त्रं पित्तमस्थीनि मज्जा कालजं फुप्फुसं नाडी चर्माणि वुक्कं मेद इति दशकं मेलापकस्य भेदाः । तथा कर्णमलं घ्राणमलम् अक्षिमलं जिह्वामलं भगमलं गुदमलं लिङ्गमलं कक्षमलं अष्टाङ्गुलमित्यष्टौ श्मशानप्रभेदाः । तथा बाह्ये लोकधातौ पीठादिविशुद्ध्या समया उच्यन्ते—इह कालाग्निः, इन्दुः, अर्कः, राहुः पीठभेदे समयचतुष्कं लोचनादीनाम् । भौमः, शुक्रश्च, मन्त्री, भृगुः, शनिः, फणीति केतुः एते रूपवज्रादीनां क्षेत्रभेदसमयाः । तथा पृथ्वी तोयं तेजो वायुः क्षितिजाः सलिलजा वह्निजा वातजाश्च इत्यष्टौ स्थावरजङ्गमा भूताश्छन्दोहभेदे भूतजानां समया इति । पुनरपि च ततः षड्रसाः, गन्धः, वर्णः, शब्दः, स्पर्श इति दशमेलापकस्य भेदाः क्रोधजानामिति । पृथिव्यादीनां चतुष्कं वर्णादीनामपि क्षयः श्वासनिःश्वासाभ्यामिति श्मशानस्य प्रभेदाः । आसुरीणाम् अष्टौ समया इति पीठादिबाह्याभ्यन्तरसमयविशुद्धिनियमः । ( वि० प्र०, 237 a–237 b )

**समाधिः**

प्रज्ञोपायात्मकेनेति ज्ञेयज्ञानैकलोलीभूतेन अक्षरसुखवशाद् ज्ञानबिम्बे समाधिश्चेति । सापि दशविधा प्राणादीनामभावत इति । ( वि० प्र०, 287 a )

इह ग्राह्यग्राहकचित्तयोरेकत्वेन यदक्षरसुखं भवति, तत्सुखं समाधिरुच्यते । तस्मात् समाधिशुद्धो वैमल्यं गतः कतिपयदिवसैस्त्रिवर्षत्रिपक्षदिवसैः सिद्ध्यते ज्ञानदेह इति । दशवशितादिकं प्राप्तो बोधिसत्त्वो भवतीति । ( वि० प्र०, 287 a )

**संग्रहवस्तूनि**

चत्वारि संग्रहवस्तूनि चिन्तयेत्—दानं प्रियवाक्यमर्थचर्यां समानार्थतामिति । ( वि० प्र०, 253 a )

**संग्रहः**

आलयविज्ञानस्य मातृगर्भे शुक्रबिन्दूनां ग्रहणं नाम संग्रहः । ( वि० प्र०, 285 b )
संग्रहश्चन्द्रबिन्दोरिति । ( वि० प्र०, 286 a )

**संभारद्वयम्**

सप्ताभिषेकदानप्रवृत्त्यर्थं मन्त्रजापमण्डलभावनार्थम्। तेन पुण्यसंभारः। तस्मात् पुण्यसम्भारहेतोः सप्ताभिषेका देया इति। अहिंसादिपञ्चविंशद् व्रतानि देयानि, ततो ज्ञानसम्भारार्थम् उत्तराभिषेकत्रयं देयम्। स्वमांसादीष्टतरदानाद्यर्थं सर्वाकारवरोपेतशून्यताभावनार्थं बोधिचित्ताक्षरार्थं तेन ज्ञानसम्भारः। तस्माद् ज्ञानसम्भारहेतोरुत्तराभिषेका देयाः। ते च चतुर्थाभिषेकेण सहिताः।

( वि० प्र०, 165 a )

**साधनम्**

इहानन्दे त्रिवज्रा कायवाक्चित्तबिन्दवोऽब्जसमरसगता भावना साधनं स्यात्। हृन्नाभिगुह्ये बिन्दूनां स्थितिरित्यर्थः। एवं साधनम्। ( वि० प्र०, 285 b )

**सुखम्**

सुखं द्वीन्द्रियजं तत्त्वं बुद्धत्वफलदायकम्।
नरा वज्रधराकारा योषितो वज्रयोषितः॥ ( वि० प्र०, 289 a )

**सूक्ष्मयोगः**

शुक्रच्यवनात् सुखोपलब्धिः सूक्ष्मयोगः।············मूलतन्त्रे भगवानाह············
अकलः कलनातीतश्चतुर्थध्यानकोटिधृक्।
सूक्ष्मयोग इति ख्यातो निस्पन्दादिगतोर्ध्वतः॥ ( वि० प्र०, 283 b )

**सेवा**

सेवा पञ्चामृताद्यैरिति। बाह्ये पञ्चामृतं विडादिकम्।············निरपेक्षता सेवा शरीरद्रव्यतृष्णापरित्यागः।············सेवा कायवाक्चित्तब्रह्मचर्यसंयम इत्यर्थः।

( वि० प्र०, 285 a )

# बौद्ध तन्त्रों की कुछ मुद्राएँ (५)

—जनार्दन पाण्डेय—

[ 'धीः' के अंक 1, 3, 7, और 9 में लगभग 400 मुद्राओं के लक्षण दिये जा चुके हैं—प्रस्तुत अंक में तथागतमुद्राओं, चिह्नमुद्राओं और कुलमुद्राओं के लक्षण दिये जा रहे हैं। ]

'धीः' के प्रथम अंक में साधनमाला और योगाम्बरतन्त्र के आधार पर 122 मुद्राओं के, तृतीय अंक में मञ्जुश्रीमूलकल्प से 88 मुद्राओं के, सप्तम अंक में म ञ्जुश्रीमूलकल्प तथा सर्वतथागत-तत्त्वसंग्रह से 75 मुद्राओं के लक्षण दिये गये थे। नवम अंक में मण्डलनृत्यों के उपयोग में आने वाली मुद्राओं को सूचना वज्रावली एवं क्रियासमुच्चय के आधार पर दी गई थी, प्रस्तुत अंक में बौद्ध-वाङ्मय के विख्यात ग्रन्थ **कालचक्रतन्त्र** के तृतीय ( साधना ) पटल श्लोक 171 से 185 तक में वर्णित मुद्राओं के लक्षण उक्त तन्त्र की सुप्रसिद्ध टीका **विमलप्रभा** के शब्दों में दे रहे हैं। इसमें तथागत मुद्राओं, चिह्नमुद्राओं और कुलमुद्राओं के लक्षण दिये गये हैं।

**विमलप्रभा** के केवल प्रथम-द्वितीय पटल ही अभी तक प्रकाशित हुए हैं। ये लक्षण तीसरे पटल की उस मातृका से दिये गये हैं, जिसका प्रकाशन शीघ्र ही केन्द्रीय उच्च तिब्बती शिक्षा संस्थान से होने जा रहा है।

## छः तथागतों की मुद्राएँ

**जिनपतिमुद्रा**

इहोभयकरेण वज्रमुष्टिबन्धोऽङ्गुष्ठौ मुष्ट्या निपीडितौ सव्यापसव्योरुमूर्ध्नि वज्रासनस्थे वज्रमुद्रा भवति।

**अक्षोभ्यमुद्रा**

पूर्वं पर्यङ्कं कृत्वा तत्र पर्यङ्के वामहस्तो भवत्युत्तानको दक्षिणो भुविगतो दक्षिणजानुप्रदेशाद् भूस्पर्शं यावत्। एवं भूस्पर्शमक्षोभ्यमुद्रा भवति।

**रत्नपाणिमुद्रा**

अपि च तेनैव क्रमेण किन्तु उत्तानको दक्षिणकरो रत्नपाणेर्वरदमुद्रेति।

**अमिताभमुद्रा**

एवं पर्यङ्के वामहस्तोर्ध्वेन सव्यहस्तः समगतोत्तानकः पद्मपाणेरमिताभस्य समाधिमुद्रेति।

**अमोघसिद्धिमुद्रा**

एवं वामकरतलमुत्तानकं पर्यङ्कमूर्ध्नि, अपरं दक्षिणकरतलं दक्षिणजानूपरि अभयप्रदम्। खड्गपाणेरमोघसिद्धेरभयमुद्रेति।

**वैरोचनमुद्रा**

एवं सव्यमुष्ट्याऽवसव्यमुष्टौ या तर्जनो वामा सा पुनरपर ऊर्ध्वमुष्टिबन्धे तर्जनी प्रविष्टा, इयं बोध्यग्रीमुद्रा वैरोचनस्य।

**अपरा धर्मचक्रमुद्रा**

तर्जन्यङ्गुष्ठयोगो वामे दक्षिणकरेऽपि कटक इव भवेत्, वामवलयनखमेलापके दक्षिणनख-मेलापके देशनायोगेन मध्यमादेः प्रसारः। अनामिकायाः कनिष्ठिकायाः किञ्चिदूर्ध्वमिति हृदयप्रदेशे धर्मचक्रमुद्रा।

**कालचक्रस्य दिव्यमुद्रा**

इह स्वशरीरे महाकवचार्थं वामहस्ते सुपूर्णं विमलशशधरं ( सुपूर्णं=पञ्चदशकलापरिपूर्णम् अ इ ऋ उ ऌ। अ ए अर् ओ अल्। ह य र व ला इति पञ्चदश स्वराः ), एवं दक्षिणहस्ते वज्रसूर्यः पञ्चदशस्वरात्मकः ( ला वा रा या हा। आल् औ आर् ऐ आ। ॡ ऊ ॠ ई आ इति )। सूर्यः सम्पूर्णः। अनयोः सूर्येन्द्वोः सम्पुटितं वज्रं क्रोधजमिति हूंकारजं पञ्चशूकं ध्यात्वा तेन वज्रेण वक्ष्यमाणया वज्रमुद्रया सर्वाङ्गं स्पर्शनीयम्। समुकुटमिति उष्णीषसहितम्। शिर आरभ्य पादान्तनखपर्यन्तम्। एषा श्रीदिव्यमुद्रा सर्वरक्षा कलुषमलहरा कालचक्रस्य।

**क्रोधराजस्य मुद्रा**

इह सव्यहस्तो वामहस्तमणिबन्धोपरि गत्वाऽधः प्रविश्य बाहूपबाहुसन्ध्युपरि वज्रमुष्टिना स्थितः, एवं वामहस्तेऽपि वज्रबन्धैर्महाक्रोधनाथस्य मुद्रा भवति।

**त्रिभुवनविजया मुद्रा**

इह तर्जन्योः परस्परमङ्कुशबन्धः कनिष्ठयोर्द्वयोर्बन्धः करपृष्ठयोगेन मुष्टिबन्धोऽङ्गुष्ठौ मुष्टिमध्ये, एवं त्रिभुवनविजया भर्तुर्हृदयस्थितेति।

**नागानां मुद्रा**

इह वामबाहूपबाहुसन्ध्युपरि दक्षिणबाहूपबाहुसन्धिबन्धेन वामकरोपबाहुसन्धिदक्षिण-करोपबाहुसन्ध्युपरि वामदक्षिणहस्तौ चलफणाकारौ, एवं चलफणाकारमुद्रा फणीनाम्, एवं सव्या-वर्तेनापि वेदितव्या।

## चिह्न मुद्राएँ

**पञ्चशूकवज्रमुद्रा**

करसम्पुटं कृत्वाऽङ्गुष्ठौ श्लिष्टौ कनिष्ठिके द्वे श्लिष्टे कमलदलसमे ते मध्यमे द्वे प्रसारिते,

मध्ये तर्जन्यौ द्वेऽर्धवक्रे चन्द्राकारे मध्यमयोः पृष्ठभागे स्वकरतलगतेऽनामिके कुञ्चितेऽधः। एवं मुद्रेयं पञ्चशूका भवति।

**अपरा वज्रमुद्रा**

आराकाराङ्गुलिका उभयकरगता अङ्गुष्ठकाद्याः समस्थाः। इत्यपरा वज्रमुद्रा प्रज्ञाऽऽलिङ्ग-नायेति।

**कुलिशमुद्रा**

द्वौ हस्तौ वज्रबन्धौ पूर्ववद् भवति हि वज्रमुष्ट्या दक्षिण ऊर्ध्वकृतया कुलिशमुद्रा।

**घण्टामुद्रा**

तथैव वामेऽधोमुष्ट्या घण्टा भवति।

**खड्गमुद्रा**

तथा मुष्ट्यर्धमनामिकाकनिष्ठिकामुष्टिमध्येऽङ्गुष्ठमेव मुष्ट्यर्धं तीक्ष्णखड्गो भवति। शरसमे तर्जनीमध्यमे च श्लिष्टे इत्यूर्ध्वे खड्गमुद्रा।

**त्रिशूलमुद्रा**

तर्जनीमध्यमाऽनामिका त्रिशूलाकारा विरला पुनरर्धमुष्ट्या त्रिशूलमुद्रा।

**कर्तिकामुद्रा**

श्रीकर्त्यां मुष्टिबन्धो भवति, कनिष्ठार्धचन्द्राकारा भयकरा दुर्दान्तानामिति कर्तिकामुद्रा।

**शरमुद्रा**

कर्णोर्ध्वं मुष्टिबन्धो वरशरमुद्रायाम् अङ्गुष्ठं मध्यमोर्ध्वे तर्जन्याध इति शरमुद्रा।

**अङ्कुशमुद्रा**

अङ्कुशे वज्रमुष्टिबन्धस्तर्जनी मुष्ट्यूर्ध्वमङ्कुशाकारा वक्राऽत्यन्तमित्यङ्कुशमुद्रा।

**कुन्तमुद्रा**

कनिष्ठाङ्गुष्ठाभ्यां मुष्टिस्तर्जनी अनामेऽधः शरसमाश्लिष्टे तयोरुपरि मध्यमा कुन्तेत्येवं कुन्तमुद्रा।

**दण्डमुद्रा**

तिर्यङ्मुष्टिश्च बाहुप्रसाराद् दण्डमुद्रा भवति।

**कुठारमुद्रा**

सुसमकरतले ऊर्ध्वमङ्गुष्ठप्रसारस्तिर्यग्विभागेन तर्जन्याद्याश्चतस्रः श्लिष्टा एवं कुठारमुद्रा भवति।

**गजचर्ममुद्रा**

ऊर्ध्वे तर्जनी मुष्टिद्वयेऽपीति गजचर्ममुद्रा ।

**दंष्ट्रामुद्रा**

दंष्ट्रायां मुष्टिबन्धो ह्युभयकरतलेऽर्धचन्द्राकारे कनिष्ठे सव्यावसव्यमुखे दर्शयेदिति दंष्ट्रामुद्रा । इति दक्षिणहस्तचिह्नमुद्रा ।

**फलकमुद्रा**

इह वामे बाहुप्रसारो भवति करतलमूर्ध्वगम्, उभयकरतलवत् खेटके फलके इति फलकमुद्रा ।

**खट्वाङ्गमुद्रा**

खट्वाङ्गे छिद्रमुष्टिस्तर्जनीमध्यमाऽनामाङ्गुष्ठाः श्लिष्टाः स्कन्धस्थाने कनिष्ठोर्ध्वप्रसारिता । एवं खट्वाङ्गमुद्रेति ।

**कपालमुद्रा**

कपाले अङ्गुल्याश्छिद्रपाणिः कमलदलवत् कपालमुद्रा उत्तानकेति ।

**धनुर्मुद्रा**

प्रसारितपाणावुत्ताना मुष्टिर्धनुषि । एवं धनुर्मुद्रा ।

**वज्रपाशमुद्रा**

वाममुष्ट्यूर्ध्वे तर्जनी आरूढा वक्रा मध्यमा द्वयोर्मध्ये छिद्रम् । एवं वज्रपाशः । एकहस्ते मुद्रेयम् । अपरा हस्तद्वयेन वरुणादेर्यत्र दक्षिणे यौगपद्येन वज्राङ्कुशो न दृश्यते । एवं पाशमुद्रेति ।

**रत्नमुद्रा**

पञ्चाङ्गुलीनां मध्ये मध्यमां कृत्वा ऊर्ध्वपाणाविति रत्नमुद्रा ।

**पद्ममुद्रा**

पद्ममुद्रायामङ्गुष्ठकनिष्ठे श्लिष्टे तर्जन्यग्रादिषु । एवमङ्गुलीनां विकासश्चतुर्दलकमलवत् । उभयहस्ताभ्यामष्टदलं भवति । एवं पद्ममुद्रेति ।

**डमरुकमुद्रा**

डमरुके मध्यमानामिकाभ्यां मुष्टिबन्धः ।

**चक्रमुद्रा**

चक्रे सर्वाङ्गुलीनामाराकारेण प्रसारः ।

**सम्पुटमुद्रा**

एकहस्ते उभयहस्तकरतलं सम्पुट इति ।

**शङ्खमुद्रा**

तर्जनी-अङ्गुष्ठयोर्योगोऽङ्गुष्ठाधः कनिष्ठादिमुष्टिरङ्गुष्ठतर्जनी प्रसारितेति शङ्खमुद्रा ।

**दर्पणमुद्रा**

आदर्शाभिमुखं सुसमकरतलं वामेति दर्पणमुद्रायामङ्गुलीकमच्छिद्रम् ।

**श्रृङ्खलामुद्रा**

तथा तर्जन्यादिकं कृत्वा कनिष्ठापर्यन्तमङ्गुष्ठोर्ध्वं तर्जनी वक्रा कुण्डलाकारा तदुपरि मध्यमा मध्यमोपरि अनामा अनामोपरि कनिष्ठा, एवं श्रृङ्खलामुद्रेति ।

**शिरोमुद्रा**

तथा ब्रह्मशिरसि अङ्गुष्ठाद्याश्चतस्रः सममुखा द्वन्द्वयोगेनाधोमुखा कनिष्ठा कुञ्चितेति शिरोमुद्रा ।

**कुण्डलमुद्रा**

हस्ताभ्यां शङ्खमुद्रा श्लिष्टा मुकुटे भवति इत्यूर्ध्वतर्जनीद्वन्द्वयोगः । उभयहस्तयोर्विषम-करतलदेशः पञ्चाङ्गुलीनां पृष्ठतः कुण्डलेष्विति कुण्डलमुद्रा ।

**कण्ठिकामुद्रा**

तथा पाणौ पृष्ठेऽङ्गुलीनां क्रमपरिचितं परस्परबन्धनं कण्ठिकायामेवं कण्ठिकामुद्रा ।

**मेखलामुद्रा**

तथा मेखलायां त्र्यङ्गुल्योऽनामामध्यमातर्जन्यो वामसव्ययोरङ्गुल्यग्रे मेलापकः कनिष्ठा-ङ्गुष्ठयोर्मुष्टिबन्ध इति मेखलामुद्रा ।

**नूपुरमुद्रा**

तथोभयहस्तयोरङ्गुष्ठे द्वे मध्यमे श्लिष्टे ताभ्यां वलय इव कृतः शेषाङ्गुलीभिर्मुष्टिबन्ध इति नूपुरमुद्रा ।

**केयूरमुद्रा-कटकमुद्रा च**

केयूरे कटके वाऽङ्गुष्ठयोगस्तर्जनीयोगो वलय इव भवतीति । इति भगवतश्चिह्नमुद्रा ।

**कुलमुद्रा**

**डाकिनीनां कुलमुद्रा**

इह सर्वासां डाकिनीनां साधारणमङ्गुष्ठदर्शनं वज्रमुष्ट्युपरि कुलमुद्रा भवति ।

**यक्षाणां कुलमुद्रा**

तथा वज्रमुष्ट्युपरि तर्जनी प्रसारिता गुह्यकानां यक्षाणां च कुलमुद्रा भवति ।

**गन्धर्वाणां कुलमुद्रा**

तथा गन्धर्वाणां मुष्टिबन्धान् प्रसार्य दर्शिता कुलमुद्रा भवति ।

**भूतानां कुलमुद्रा**

कनिष्ठा दर्शिता भूतानां कुलं भवति ।

**राक्षसानां कुलमुद्रा**

तथोर्ध्वं चतुरङ्गुलीभिर्मुष्टिबन्धः करतलं प्रकटं दर्शितं राक्षसानां कुलं स्यात् ।

8

**सिद्धानां कुलमुद्रा**

सिद्धानां मुष्टिबन्धो दर्शितः कुलं भवति ।

**ब्रह्मराक्षसस्य कुलमुद्रा**

ब्रह्मराक्षसस्य हस्तपृष्ठतलं कुलं भवति ।

**असुराणां कुलमुद्रा**

तथाऽसुराणां बाहूपबाहुपर्वसन्धिः कुलम् ।

**व्यन्तराणां कुलमुद्रा**

तथोपबाहुकरतलसन्धिर्दर्शिता व्यन्तराणां कुलं स्यात् । एवमष्टविधा मुद्रा वामहस्तेन दर्शनीयाऽष्टकुलजानामिति ।

## जातिमुद्रा

इदानीं तिर्यङ्मुखीनां जातिमुद्रोच्यते ।

**नखीनां जातिमुद्रा**

इह पञ्चाङ्गुल्यर्धवक्रा सिंहनखाकारेण नखीनां जातिमुद्रा ।

**शृङ्गिणां जातिमुद्रा**

एककरतले उभये वा तथा तर्जन्यौ द्वेऽर्द्धवक्रेऽर्द्धचन्द्राकारेणोभयकरमुष्ट्युपरि शिरसि दर्शिता मुष्टिबन्धादिति शृङ्गिणां जातिमुद्रा ।

**गरुडजातिमुद्रा**

तथा बद्धेऽन्योन्यं कनिष्ठे विषमकरतले पृष्ठयोगेन तर्जनीमध्यमाद्यनामिताऽङ्गुष्ठयोर्मुखयोग इत्येवं गरुडमुद्रा । तथा पञ्चाङ्गुल्योऽग्रपर्ववक्रा दर्शिता जातिमुद्रा भवति ।

**ज्वालामुद्रा**

तथा ज्वालामुद्रायां मध्यमाऽनामाकनिष्ठा प्रसारिता उभयकरतर्जन्यौ द्वेऽन्योन्यं ग्रन्थिते शिरस उपर्युधोमुखेनाङ्गुष्ठौ श्लिष्टाविति ।

**द्वितीया ज्वालामुद्रा**

वरकरतलयोस्तेनैव प्रकारेण किन्तु तर्जनी प्रसारिताऽन्या द्वितीया ज्वालामुद्रेति जातिमुद्रा तिर्यङ्मुखीनां दर्शनीयेति नियमः ।

यहाँ तक प्रधान मुद्राएँ बताई हैं, जिनका साधक से सम्बन्ध है। इसके बाद श्लोक 186 से 191 तक की व्याख्या में वीरवीरेश्वरियों की परस्पर संभाषणमुद्रा, निर्भर्त्सनमुद्रा, अत्यन्त क्रुद्धमुद्रा एवं इनकी प्रतिमुद्राओं के लक्षण और स्वरूप दर्शाये गये हैं ।

●

# वज्रधातु महामण्डल

—डॉ० बनारसीलाल—

[ तन्त्रसाधना के लिये मण्डल आवश्यक अंग है। वज्राचार्य शिष्य को मण्डल में प्रविष्ट कराकर अभिषेक प्रदान करता है। गर्भधातु मण्डल एवं वज्रधातु मण्डल का प्रचलन काफी प्राचीन समय से रहा है। चीन एवं जापान में इन मण्डलों का व्यापक प्रचार हुआ है। इन दोनों मण्डलों में मुख्य देवता वैरोचन तथागत हैं। इस मण्डल का वर्णन अभयाकर गुप्त की निष्पन्नयोगावली में आया है। मञ्जुश्रीनामसंगीति का एक परिच्छेद वज्रधातु मण्डल से सम्बद्ध है। विलासवज्र की टीका में जिन नाममन्त्राक्षर पदों द्वारा मण्डल के देवगणों का निर्देश किया है, उन्हें प्रस्तुत किया जा रहा है। इसी सन्दर्भ में वज्रधातु महामण्डल का स्वरूप भी प्रस्तुत करने का प्रयास किया गया है। ]

तन्त्रों में मण्डल, अभिषेक एवं साधन आवश्यक अंग हैं। बौद्ध तन्त्रों में अनेक मण्डलों का विस्तार से वर्णन मिलता है। अभयाकर गुप्त विरचित निष्पन्नयोगावली में 26 मण्डलों का विवरण दिया गया है। तन्त्र की साधना के लिये मण्डल आवश्यक है। बौद्ध तन्त्र परम्परा में साधना के दो क्रम हैं—उत्पत्तिक्रम और निष्पन्नक्रम या सम्पन्नक्रम। तन्त्रसाधना के लिये अभिषेक के समय गुरु शिष्य को मण्डल में प्रवेश कराता है। गुरु की एक विशेषता यह भी बताई गई है कि वह मण्डल लेखन के कार्य को जानता हो[1]। मण्डल-प्रवेश के बाद अभिषिक्त शिष्य उस तन्त्र की साधना का अधिकारी होता है। पहले साधक को भावना के लिये बाह्य मण्डल अपेक्षित होता है। इसी के आधार पर साधक अपने आपको देवस्वरूप परिकल्पित कर स्वदेह में मण्डल की भावना करता है। इसके लिये प्रथमतः बोधिचित्त उत्पन्न करता है तथा अनित्यता एवं निःस्वभावता का साक्षात्कार कर सम्पूर्ण जगत् को स्वदेह-मण्डल में सृजित करता है। साधना के इस क्रम में मण्डल के देवताओं की आकार-निष्पत्ति को उत्पत्तिक्रम कहा गया है[2]। निष्पन्नक्रम में साधक सहज निर्विकल्प होकर सभी आकार एवं वर्ण, संस्थान आदि कल्पनाओं से मुक्त होता है[3]। मूलतः साधना क्रम में देवताओं का स्वदेह मण्डल में आवाहन तथा अपनी देवरूप

---

1. दशतत्त्वपरिज्ञाता मण्डलालेख्यकर्मवित्।
   मन्त्रव्याख्याकृदाचार्यः प्रसन्नः स्याज्जितेन्द्रियः॥ ( गुरुपञ्चाशिका–9 )
2. क्रमः प्रकारः। कस्य क्रमः ? समाधेः। चन्द्रचिह्नबीजादिपरिणामेन देवताकारनिष्पत्तिरुत्पत्तिः, सा यस्मिन् समाधावस्ति स उत्पत्तिक्रमः ( हे० त० टी०, 1.23 a )
3. उत्पन्नक्रमः सहजो निर्विकल्पः सर्वाकारो मुखभुजवर्णसंस्थानकल्पनारहित इति। ( वि० प्र०, पृ० 20 )

में निष्पत्ति कराकर शून्यता का अधिगम कर विसर्जन की प्रक्रिया वर्णित है। विसर्जन के बाद साधक देवरूप हो जाता है, जो शून्य निरञ्जन होता है। तन्त्रों में इसे 'स्वाधिदैवत' योग भी कहा गया है।

अभिषेक के समय साधक तीन प्रकार के मण्डलों का प्रयोग करते हैं–रजोमण्डल, पट्टमण्डल तथा विमानमण्डल। सभी मण्डलों का स्वरूप, उनमें स्थित देवता, लोकपाल एवं द्वारपाल भिन्न-भिन्न होते हैं। प्रत्येक तन्त्र का अपना विशिष्ट मण्डल होता है। इन मण्डलों में तत् तत् तन्त्रानुसार उस तन्त्र के इष्टदेव मध्य में स्थित होते हैं। उत्पत्तिक्रम की साधना में साधक मण्डल के मध्य में स्थित इष्ट देवता के साथ अपनी अभिन्न रूप में भावना करता है, या स्वयं वज्रधर का रूप धारण करता है तथा स्वदेह मण्डल में अन्य देवों, यक्षों और द्वारपालों को भावना के बल पर निर्मित करता है।

मण्डल शब्द की निष्पत्ति दो शब्दों से हुई है 'मण्ड' एवं 'ल'। इस शब्द की व्याख्या के प्रसंग में सर्वत्र 'मण्ड' का अर्थ सार तथा 'ल' का अर्थ लाने, ग्रहण करने अथवा स्वीकार करने के अर्थ में प्रयुक्त हुआ है[1]। हेवज्रतन्त्र की टीका योगरत्नमाला में सार का अर्थ महासुख रूपी ज्ञान है, जो इसे ग्रहण करता है वह मण्डल है[2]। गुह्यसमाजतन्त्र की टीका प्रदीपोद्योतन में संवृति और परमार्थ सत्य को ग्रहण करने के अर्थ में मण्डल शब्द का प्रतिपादन किया है[3]।

### वज्रधातु महामण्डल का स्वरूप

वज्रधातु मण्डल वज्रपञ्जर में द्वीपोपद्वीप एवं सात समुद्रों से परिकलित सुमेरु के ऊपर एक कूटागार है, जिसके मध्य सिंह के ऊपर विश्वाम्भोज कर्णिका पर भगवान् वैरोचन वज्रपर्यंक मुद्रा में स्थित हैं। पञ्चबुद्ध रत्नमुकुटों से मण्डित तथा विचित्र आभरणों से अलंकृत शान्त, सित, पीत, रक्त, हरित चार मुख एवं अष्ट भुजाओं वाले हैं। दो सव्य भुजाएँ बोध्यंगी मुद्रा में तथा दो वाम भुजायें ध्यान मुद्रा में हैं। अन्य दो दक्षिण भुजाओं में अक्षमाला तथा शर धारण किये तथा वाम भुजाओं में चक्र और चाप धारण किये हैं। भगवान् वैरोचन शुक्ल मुख तथा बोध्यंगी

---

1. मण्डलं सारमित्युक्तं बोधिचित्तं महत् सुखम्।
   आदानं तत्करोतीति मण्डलं मलनं मतम्॥ (हे० त०, 2.3.27)
   मण्डः सारः, तं लाति गृह्णातीति मण्डलम्। (गु० स० प्र०, पृ० 41)
   मण्डं सारं लाति गृह्णाति स्वीकरोतीति मण्डलम्। (गु० स० प्र०, पृ० 132)
2. मण्डलं सारमित्युक्तम्। महासुखज्ञानं लाति गृह्णातीति मण्डलम्। (हे० त० टी० 52a)
3. मण्डं सारं संवृतिसत्यम्, तं लाति गृह्णातीति मण्डलम्, नेयार्थः। मण्डं सारं परमार्थसत्यम्, तं लाति गृह्णातीति मण्डलम्। (गु० स० प्र०, पृ० 45)

मुद्रा में हैं। इस विश्वाम्भोज के पूर्व दल में नीलवर्णी सत्त्ववज्री,[1] दक्षिण में पीतवर्णी रत्नवज्री, पश्चिम में रक्तवर्णी धर्मवज्री तथा उत्तर में हरितवर्णी कर्मवज्री स्थित हैं।

इस कूटागार की पूर्व दिशा में नील वर्ण के अक्षोभ्य विश्वपद्म पुष्कर में गज के ऊपर भूमिस्पर्श मुद्रा में स्थित हैं। इसके पूर्व दल में सित वर्ण के वज्रसत्त्व, दक्षिण में पीत वर्ण के वज्रराज, उत्तर में रक्त वर्ण के वज्रराग तथा पश्चिम में मरकत आभा वाले वज्रसाधु स्थित हैं।

कूटागार की दक्षिण दिशा में पीत वर्ण के रत्नसम्भव विश्वाम्भोज कर्णिका के ऊपर वरद मुद्रा में अश्वपृष्ठ पर अवस्थित हैं। इसके पूर्व दल में पीत वर्ण के वज्ररत्न, दक्षिण में वज्रतेज, उत्तर में वज्रकेतु तथा पश्चिम में वज्रहास स्थित हैं।

कूटागार के पश्चिम में विश्वसरोज के वरटक पर मयूर के ऊपर रक्त वर्ण के अमिताभ स्थित हैं। इसके पूर्व दल में सित-रक्त वर्ण के वज्रधर्म, दक्षिण में श्याम वर्ण के वज्रतीक्ष्ण, उत्तर में सुवर्ण वर्ण के वज्रहेतु तथा पश्चिम में रक्तवर्ण के वज्रभाष स्थित हैं।

कूटागार की उत्तर दिशा में विश्वाम्भोज कर्णिका में श्याम वर्ण के अमोघसिद्धि गरुड़, के ऊपर स्थित हैं। इसके पूर्व दल में हरित वर्ण के वज्रकर्म, दक्षिण में पीत वर्ण के वज्ररक्ष, उत्तर में कृष्ण वर्ण के वज्रयक्ष तथा पश्चिम में पीतवर्ण के वज्रसन्धि स्थित हैं।

कूटागार की आग्नेय दिशा में सितवर्णी लास्या, नैर्ऋत्य में पीतवर्णी माला, वायव्य में रक्तवर्णी गीता तथा ईशान में श्यामवर्णी नृत्या अवस्थित है।

कूटागार के गर्भ के बाहरी पट्टिकाओं के पूर्व में मैत्रेय, अमोघदर्शी, सर्वापायंजह, सर्वशोकतमोनिर्घातमति स्थित हैं। दक्षिण में गन्धहस्ति, त्रिशूलङ्गम, गगनगञ्ज तथा ज्ञानकेतु स्थित हैं। पश्चिम पङ्कज पर अमितप्रभ, चन्द्रप्रभ, भद्रपाल तथा जालिनीप्रभा है। उत्तर पद्म पर वज्रगर्भ, अक्षयमति, प्रतिभानकूट तथा समन्तभद्र अवस्थित हैं।

बाह्य पट्टिका के आग्नेय कोण में वज्रधूपा, नैर्ऋत्य कोण में वज्रपुष्पा, वायव्य में वज्रालोका तथा ईशान कोण के पद्म के ऊपर वज्रगन्धा स्थित हैं।

बाह्य पट्टिका के चारों द्वारों पर, पूर्व में सितवर्ण के वज्रांकुश, दक्षिण में पीतवर्ण के

---

1. निष्पन्नयोगावली में इन सभी के मुद्रा, ध्यान एवं आयुधों का विवरण भी दिया गया है।

